पीठान्युक्तान्येवमेतानि पञ्च
प्रासादानां नामभिर्लक्षणैश्च ।
पञ्च प्रोक्ता ये तलच्छन्दभेदा-
स्तैर्विज्ञातैः पूज्यतामेति लोके ॥ ६४ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
पीठपञ्चकाध्यायो नामैकषष्टितमः ॥

——:०:——

## अथ द्राविडप्रासादलक्षणं नाम द्विषष्टितमोऽध्यायः ।

——:०:——

ऊर्ध्वमानमथ ब्रूमो घण्टान्तपुरपादितः(?) ।
प्रमाणं कर्णमानेन सर्वेषामेव धारयेत् ॥ १ ॥

तत्रैकभूमि(कः) कार्यो हस्तपञ्चकविस्तृतः ।
अङ्गुलद्वितयोपेत(:?) सप्तहस्तसमुच्छ्रितः ॥ २ ॥

पादो द्विहस्त उत्सेधात् सर्वालङ्कारभूषितः ।
सार्धहस्तसमुत्सेध(स्तावन्मानः स्तरावधि?) ॥ ३ ॥

माला तु द्विस्तरा प्रोक्ता स्तरो लशुनकं भवेत् ।
भरणं स्तरमेकं स्याद् भरणार्धं स्तरद्वयम् ॥ ४ ॥

कलशाद्युत्तरं ज्ञेयो वारराद्यासमन्वितः(?) ।
द्विस्तरं कुलकं कुर्यात् पद्मपत्रसमन्वितम् ॥ ५ ॥

वीरगन्द्रां(?) पुनः कुर्यात् स्तरमेकं तदूर्ध्वतः ।
द्विस्तरं हीरकं प्रोक्तं पट्टश्चैव तथाविधः ॥ ६ ॥

पट्टिका स्तरमेकं स्याद् वसन्तं द्विस्तरं विदुः ।
वसन्तपट्टिका चोर्ध्वं स्तरमेकं विधीयते ॥ ७ ॥

कपोतं नासिकायुक्तं विदधीत स्तरत्रयम् ।
+दन्तरं प्रकुर्वीत मेटमेकस्तवंस्तत (?) ॥ ८ ॥

१. 'तदन्तरे प्रकुर्वीत मेडमेकं स्तरं ततः' इति स्यात् ।

स्तरप्रमाणं मकरं तद्वन्मकरपट्टिकाम् ।
पुनश्छेदं स्तरं कुर्याद् वेदीबन्धस्ततः स्तरम् ॥ ९ ॥

छेदः स्तरप्रमाणश्च कण्ठः स्याद् द्विस्तरं ततः ।
पट्टिका स्तरमेकं तु तद्वच्चाम्बुजपट्टिका ॥ १० ॥

मालादिपद्मपत्रान्तं द्विहस्तोत्सेधमीरितम् ।
सार्धहस्तः समुत्सेधः कूटस्य परिकीर्तितः ॥ ११ ॥

नासिकापद्मसंयुक्तं तदूर्ध्वं कलशो भवेत् ।
एकभूमेरिदं मानं प्रासादस्य प्रकीर्तितम् ॥ १२ ॥

एकभूमिकः ॥

द्विभूमिकस्य लक्ष्माथ प्रासादस्याभिधीयते ।
सप्तहस्तसविस्ता + + + + + समुच्छ्रितः ॥ १३ ॥

कर्णमानाद् भवेदस्य विभागोऽथ निगद्यते ।
द्विहस्तं कल्पयेद् बीजं जङ्घा सार्धद्विहस्तकम् ॥ १४ ॥

कूटस्य सन्निवेशोऽयं विज्ञातव्यः सभागिकः ।
जङ्घा द्वितीया तु पुनः कर्तव्या तस्य भागिका ॥ १५ ॥

सन्निवेशो द्वितीयस्य स्यात् कूटस्यार्धभागिकः ।
(दिदिक्रव्यस्पृ?) कर्तव्या सह कण्ठेन भागिकः ॥ १६ ॥

तस्योपरिष्टाद् घण्टा च सार्धभागसमुच्छ्रिता ।
नासिकापद्मसंयुक्ता विधातव्या विपश्चिता ॥ १७ ॥

पीठानां पूर्वमुक्तानां पादबन्धादिनामभिः ।
पञ्चानां कल्पयेदेवं ++ भूम्यादितः क्रमात् ॥ १८ ॥

तेषां शोभावहं यत् स्यात् तत् कर्तव्यं विपश्चिता ।
तस्योपरि भवेज्जङ्घा मालाल+ +संयुता ॥ १९ ॥

भरणं कलशस्तद्वद् (द्वा?वी)रगण्डसमन्वितम् ।
उच्छालं पूर्वमानेन पद्मपत्रायुतं ततः(?) ॥ २० ॥

वीरगण्डः पुनः कार्यो हीरं पूर्वक्रमेण च ।
तस्योपरिष्टात् पट्टश्च भवेत् पट्टिकया सह ॥ २१ ॥

(वसन्तवेदूर्ध्वं ततः?)स्तस्यैवोपरि पट्टिका ।
ततः कपोतच्छेदश्च (मेढकर एव च?) ॥ २२ ॥

पट्टिका (मकरोष्या[1] च भेद?)कण्ठोऽथ पट्टिका ।
वेदीच्छेदश्च कण्ठश्च पट्टिका पद्मपट्टिका ॥ २३ ॥

कूटं तदूर्ध्वं कुर्वीत विचित्रं नासिकान्वितम् ।
छेदान्तं पूर्वमानेन सर्वमेतद् विधीयते ॥ २४ ॥

तस्योपरि पुनर्जङ्घा सर्वाभरणभूषिता ।
ततो मालाथ (ल)शुनं तोरणं कलशस्ततः ॥ २५ ॥

वीरगण्डस्त(तो?थो)च्छालं पत्रकं वीरगण्डकः ।
हीरकं पट्टिका तद्वद्वसन्तपट्टिका पुनः ॥ २६ ॥

कपोतच्छेदमेढाश्च (मकरोऽस्य[2]?) च पट्टिका ।
छेदः करपट्टिका च (?) वेदीच्छेदोऽथ कण्ठकः ॥ २७ ॥

पट्टिका पद्मपूर्वा च कर्तव्या पट्टिका ++ ।
ततश्छेदो विधातव्यः सर्वैराभरणैर्युतः ॥ २८ ॥

ततश्छित्त्वा तथा कार्यं यथा शोभा प्रजायते ।
पुनः कण्ठ्यं(?) प्रदातव्यः पट्टिका पद्मपट्टिका ॥ २९ ॥

ततः कण्ठं विधातव्यं चन्द्रमालाविभूषितम्(?) ।
प्रकुर्वीत ततश्छेदमुपरिष्टाद् विचक्षणः ॥ ३० ॥

कण्ठपट्टिकया युक्तं तदूर्ध्वं कण्ठपट्टिकाम् ।
सप्ताङ्गुलानि कर्तव्यस्ततो घण्टाविनिर्गमः ॥ ३१ ॥

भागार्धं विस्तृतिस्तस्या विस्तारार्धं समुच्छ्रितिः ।
एवं द्विभूमिकं प्राज्ञः प्रासादं परिकल्पयेत् ॥ ३२ ॥

द्विभूमिकः ॥

त्रिभूमिकस्तृतीयोऽथ प्रासादोऽस्माभिरुच्यते ।
तस्यैकादश विस्तारो हस्ताः पञ्चदशोच्छ्रयः ॥ ३३ ॥

चतुर्दशाङ्गुलान्येषां भवेदस्याधिका(पि?नि) च ।
+++ भूमिकस्यैतत् कर्णमानमसंशयम् ॥ ३४ ॥

---

१. 'मकराख्या च वेदी' इति स्यात् । २. 'मकराख्या' इति स्यात् ।

पीठं द्विहस्तं कुर्वीत तत्रादौ पूर्वसूचितम् ।
जङ्घां त्रिभागिकोत्सेधां कूटोच्छ्रायं तु भागिकम् ॥ ३५ ॥

भवेज्जङ्घा तृतीया च सार्धभागद्वयं ततः ।
भागं च कूटप्रसरश्चन्द्रशालाविभूषितः ॥ ३६ ॥

पुनस्तृतीया जङ्घा (स्याद् भाग)द्वय(स)मुच्छ्रिता ।
ततश्च(शा?)कू(ट)प्रस्तारो भागिको भूषणान्वितः ॥ ३७ ॥

भागं स्याद् वेदिबन्धः+सगुणद्वारकण्ठकः ।
चतु(र्द?र्दि)शमसौ कार्यो भूषायुक्तो यथोचितम् ॥ ३८ ॥

घण्टाच्छेदस्तु भागौ (द्वौ) द्व्यङ्गुलद्वयसंयुतौ ।
एकादशस्तरा (कुरु?)स्तस्योपरि विधीयते ॥ ३९ ॥

इदानीं प्रविभागोऽस्य पीठादूर्ध्वं विधीयते ।
हस्तमेकं भवेज्जङ्घा(द्वंयपिच?)तया समा ॥ ४० ॥

माला तु द्विस्तरा प्रोक्ता लशुनं भागिकं ततः ।
भरणं स्तरमेकं स्यात् कलशोऽपिच तत्समः ॥ ४१ ॥

वीरगण्डसमायुक्तमुच्छालं द्विस्तरं ततः ।
ततस्तरं वीरगण्डो + + + + + + + + + ॥ ४२ ॥

हीरकं द्विस्तरं विद्यात् (स?स्त)रं वासन्तपट्टिका ।
कपोतं नासिकायुक्तं त्रिस्तरं कारयेत् ततः ॥ ४३ ॥

छेदं प्रस्तप्रमाणं च मेढं च तत्सम्मितम् (?) ।
स्तरं कुर्वीत मकरं तदर्धेनास्य पट्टिका ॥ ४४ ॥

छेदं तथैव कुर्वीत कण्ठमेकस्तरं ततः ।
पट्टिका वेदिका चैव स्तरमेकं विधीयते ॥ ४५ ॥

छेदमर्धस्तरं विद्यात् कण्ठं सार्धस्तरं ततः ।
पट्टिका स्यात् स्तरं पद्मं स्तरमेकं ततो भवेत् ॥ ४६ ॥

शेषे च सुन्दरं कण्ठं विधातव्यं(?) विचक्षणैः ।
अनन्तरं द्वितीया च जङ्घा कार्या नवस्तरा ॥ ४७ ॥

मध्ये च सा प्रकर्तव्या तदूर्ध्वं तां विभाजयेत् ।
ततस्तरं भवेच्छाला स्तरार्धं लशुनं ततः ॥ ४८ ॥

तथैव भरणं ज्ञेयं पूर्वनिर्दिष्टलक्षणम् ।
वीरगण्डेन सहितः कलशोऽपि तथा भवेत् ॥ ४९ ॥

पद्मपत्रिकया युक्तं स्तरमुच्छालकं विदुः ।
वीरगण्डं स्तरं विद्यादर्धभागं च हीरकम् ॥ ५० ॥

पट्टं तथैव कुर्वीत स्तरस्यार्धेन पट्टिका ।
वसन्तः स्तरमेकं स्याद् स्तरं वासन्तपट्टिका ॥ ५१ ॥

कपोतं त्रिस्तरं कुर्यान्नासिकासहितं बुधः ।
छेदमर्धस्तरं विद्यान्मेढं तत्तुल्यमेव च ॥ ५२ ॥

मकरं स्तरमेकं च भागार्धं पट्टिका ततः ।
भागमेकं भवेच्छेदः स्तरं कण्ठस्तदूर्ध्वतः ॥ ५३ ॥

पट्टिका वेदिका चैव स्तरमेकं विधीयते ।
छेदं भागाधिकं कुर्यात् कण्ठकं सार्धभागिकम् ॥ ५४ ॥

भागेन पट्टिकां कुर्यात् तथा कमलपत्रिकाम् ।
कूटं ततः परं कुर्यान्नासिका(चीसु) विभूषितम् ॥ ५५ ॥

तृतीयजङ्घा(मद्वा?तद्वत्) स्याच्चतुर्भिः कल्पिता स्तरैः ।
स्तरमेकं भवेन्माला स्तरं च लशुनं विदुः ॥ ५६ ॥

भरणं स्तरमेकं च कुम्भमेकस्तरं तथा ।
वीरगण्डसमोपेतमुच्छालं स्यात् तदूर्ध्वतः ॥ ५७ ॥

स्तरमेकं प्रकुर्वीत वीरगण्डसमु(च्छ्रि)तिम् ।
ततश्च हीरकं कुर्याद् भागेनैकेन बुद्धिमान् ॥ ५८ ॥

सार्धभागेन पट्टिः स्यात् पट्टिकार्धं स्तरं तथा ।
स्तरमेकं वसन्तं स्यात् स्तरं वासन्तपट्टिका ॥ ५९ ॥

कपोतो द्विस्तरश्छेदोऽर्धस्तरो मेण्ढकः स्तरः ।
भागिको मकरः कार्यः पट्टिका चार्धभागिका ॥ ६० ॥

(भेदो?)ऽर्धभागिको भागमेकं कण्ठः प्रकीर्तितः ।
पट्टिकावेदिका(भेदा?)स्त्रयोऽप्यर्धस्तरं पृथक् ॥ ६१ ॥

कण्ठश्चार्धस्तरः कार्यः पीठिका चार्धभागिका ।
अर्धभागेन कर्तव्या तदूर्ध्वं पद्मपत्रिका ॥ ६२ ॥

विचित्रलक्षणोपेतं ततः कूटं विधीयते ।
स्तरमेकं भवेच्छेदः स्यात् कण्ठोऽप्येवमेव (च?) हि ॥ ६३ ॥

पट्टिका स्तरमेकं स्यात् ततो वेदी स्तरद्वयम् ।
छेदः स्तरं भवेद् भूयः कण्ठः स्याद् द्विस्तरं ततः ॥ ६४ ॥

कर्तव्ये स्तरमेकैकं पट्टिका पद्मपत्रिका ।
घण्टा ततः(क?प)रं कार्या मानतो विंशतिस्तरा ॥ ६५ ॥

एकादशस्तरः कुम्भः सर्वेषां सर्वतो भवेत् ।
त्रिभूमिकोऽयमाख्यातश्चतुर्भूमिरथोच्यते ॥ ६६ ॥

त्रिभूमिकः ॥

हस्तान् पञ्चदश क्षेत्रं विस्तारा(त्तु)प्रकल्पयेत् ।
उच्छ्रायेण तु हस्तानां स्यात् (पौदकविंशतिः?)[1] ॥ ६७ ॥

द्विहस्तं कारयेत् पीठं जङ्घां हस्तत्रयोच्छ्रिताम् ।
सार्धहस्तं भवेत् कूटं सर्वालङ्कारभूषितम् ॥ ६८ ॥

द्वितीयजङ्घा कर्तव्या पादहीनं करत्रयम् ।
सपादहस्तं कुर्वीत कूटमन्यत् तदूर्ध्वतः ॥ ६९ ॥

तृतीयजङ्घा कर्तव्या सार्धं हस्तद्वयं ततः ।
ततश्च कूटप्रस्तारो हस्तमेकं विधीयते ॥ ७० ॥

जङ्घा चतुर्थी कर्तव्या सार्धहस्तद्वयं ततः ।
ततश्च कूटप्रस्तारो हस्तमेकं विधीयते ॥ ७१ ॥

जङ्घा चतुर्थी कर्तव्या सपादद्विकरोच्छ्रिता ।
हस्तं च कूटप्रस्तारो वेदीबन्धस्तथाविधः ॥ ७२ ॥

गर्भार्धविस्तृता घण्टा कार्या हस्तत्रयोच्छ्रिता ।
चतुर्दशस्तरः कुम्भः सर्वेषामुपरि स्थितः ॥ ७३ ॥

---

१. 'पादोनैकविंशतिः' इति स्यात् ।

सूचि(का?ता)हस्तसङ्ख्यैषा विभागः कथ्यतेऽधुना ।
पीठं हस्तद्वयोत्सेधं जङ्घालङ्कृतिरुच्यते ॥ ७४ ॥

दशभागो भवेदेकमुच्छालं द्विस्तरं ततः ।
वीरगण्डं स्तरं विद्याद् द्विस्तरं हीरकं भवेत् ॥ ७५ ॥

पट्टस्तथैव विज्ञेयो(त्सेधकी?)पट्टिका ततः ।
वसन्तं द्विस्तरं + + + + वासन्तपट्टिका ॥ ७६ ॥

कपोतस्त्रिस्तरः कार्यो भागं छेदो विधीयते ।
मेढं स्तरं प्रकुर्वीत स्तरं कण्ठस्य पट्टिका ॥ ७७ ॥

कुर्वीत भागिकीं (देवा?वेदीं)तत(च्छे?छे)दे च भागिकम् ।
पुनः कण्ठं प्रकुर्वीत द्विस्तरं पट्टिकां ततः ॥ ७८ ॥

स्यात् पद्मपत्रिकाप्येवं घण्टा पञ्चस्तरा ततः ।
विचित्रं लक्षणोपेतं ततः कुम्भं निवेशयेत् ॥ ७९ ॥

जङ्घास्तम्भं द्वितीया(यां) विदध्यादष्टभागिकम् ।
मालां + द्विस्तरं कुर्याद् भागिकं (त?ल)शुनं ततः ॥ ८० ॥

भर(णं) स्तरमेकं च कलशं तत्प्रमाणतः ।
वीरगण्डेन संयुक्तं (तावां?श्चो?)च्छालकं भवेत् ॥ ८१ ॥

द्विस्तरं तत्तु विज्ञेयं वीरगण्डः स्तरं भवेत् ।
हीरकं द्विस्तरं विद्यात् पद्मं चैव तथाविधम् ॥ ८२ ॥

पट्टिका स्तरमेकं स्याद् वसन्तं द्विस्तरं ततः ।
वसन्तपट्टिकां भागं कपोतं त्रिस्तरोच्छ्रितम् ॥ ८३ ॥

कुर्वीत भागिकं (भेदं?) स्तरमेकं च मेढकम् ।
मकरं स्तरमेकं च तथा मकरपट्टिकाम् ॥ ८४ ॥

भेदः स्तरं भवेत् कण्ठः स्तरं भागं च पट्टिका ।
वेदिका स्तरमेकं च च्छेदमर्धेन कारयेत् ॥ ८५ ॥

कण्ठं सार्धस्तरं कुर्यात् स्तरमेकं च पट्टिकाम् ।
(आभा?अम्भो)जपत्रिकां भागं कुर्याद् घण्टां चतुःस्तराम् ॥ ८६ ॥

प्राग्ग्रीवभूषिता सा स्यात् कुम्भं कुर्यात् तदूर्ध्वतः।
जङ्घास्तम्भस्तृतीयायां सप्तांशश्चतुर+कः॥ ८७॥

ततो मालाथ लशुनं भरणं कुम्भकाण्डकौ।
उच्छालं गण्डको हीरं प्रत्येकं स्युः स्तरं स्तरम्॥ ८८॥

पद्मं सार्धस्तरं विद्याद् भागेऽर्धे पट्टिकां तथा।
भागमेकं वसन्तः स्याद् भागं वासन्तपट्टिका॥ ८९॥

कपोतं त्रिस्तरं कुर्याच्छेदमेकस्तरं ततः।
ततश्च मे(ढंकं मरं?) विदधीत स्तरं स्तरम्॥ ९०॥

तत्पट्टिका तु भागार्धं (भेदं?) भागार्धमेव च।
कण्ठो वेदी पट्टिका (च) त्रीण्येतानि स्तरं स्तरम्॥ ९१॥

स्तरस्यार्धं भवेच्छेदः कण्ठः सार्धस्तरं ततः।
भागार्धं पट्टिका कार्या तावती पद्मपत्रिका॥ ९२॥

चतुर्भागा भवेद् घण्टा गुणद्वारसमान्विता।
द्विस्तरं कारयेत् कुम्भं घण्टायाः स्थितमूर्ध्वतः॥ ९३॥

एवं भूमिस्तृतीयैषा चतुर्थी कथ्यतेऽधुना।
कर्तव्या (पट्टरा?)जङ्घा महास्तम्भसमन्विता॥ ९४॥

मालाथ लशुनं तद्वद् भरणं कुम्भ एव च।
उच्छालं गण्डकं हीरमिति प्रा+पृथक् पृथक्॥ ९५॥

सार्धभागं भवेत् (पादः?पट्टः) पट्टिकार्धस्तरं ततः।
बसन्तं (स्त)रमेकं स्यात् तत्संज्ञः(?) पट्टिका स्तरम्॥ ९६॥

कपोतं द्विस्तरं विद्याच्छेदं चार्धस्तरं ततः।
मेढं तथैव कुर्वीत मकरं च स्तरं बुधः॥ ९७॥

पट्टिकां मकराख्यां च च्छेदमेकस्तरं विदुः।
स्तरमेकं भवेत् कण्ठः स्तरस्यार्धं च पट्टिका॥ ९८॥

तथैव वेदिकां कुर्याच्छेदमर्धस्तरं पुनः।
सार्धभागं प्रकुर्वीत कण्ठदेशं विचक्षणः॥ ९९॥

---

१. 'ढं मकरम्' इति स्यात्। २. 'तत्संज्ञा' इति स्यात्।

पट्टिका (मंच?)संज्ञा तु स्तरमेकं विधीयते ।
घण्टा स्तरद्वयं कार्या गुणद्वारविभूषिता ॥ १०० ॥

कुम्भं विदध्यादुपरि द्विस्तरं पङ्कजाननम् ।
भागमेकं भवेच्छेदस्ततः कण्ठः स्तरद्वयम् ॥ १०१ ॥

पट्टिका स्तरमेकं तु वेदिका तु स्तरावुभौ ।
पुनश्छेदो भवेद् भागं++कण्ठो विधीयते ॥ १०२ ॥

पट्टिका स्तरमेकं तु तद्वदम्भोजपत्रिका ।
स्तराणां विंशतिर्घण्टा भवेद् गर्भार्धविस्तृता ॥ १०३ ॥

चन्द्रशालाश्च कर्तव्या दर्शनीयाश्चतुर्दिशम् ।
एवं पद्मे महापद्मे स्वस्तिके वर्धमानके ॥ १०४ ॥

तथैव सर्वतोभद्रे कुर्याद् घण्टामिमां बुधः ।
कुम्भं तु पञ्चदशभिः स्तरैः (कार्या?कुर्यात्) समुन्नतम् ॥ १०५ ॥

स्याच्चतुर्भूमिको ह्येवं तलच्छन्दस्तु कामतः ।

चतुर्भूमिकः ॥

पञ्चभौममथ ब्रूमः प्रासादं राजपूजितम् ॥ १०६ ॥

विस्तारेण विधातव्यः स ह(स्त?स्ता)नेकविंशतिम् ।
विभाजयेत् तथोत्सेधं पादोनत्रिंशतं करान् ॥ १०७ ॥

पीठं भागद्वयं सार्धं जङ्घा (साराम्रा?)त्रिभागिकी ।
कुर्वीत कूटप्रस्तारं सार्धहस्तं च बुद्धिमान् ॥ १०८ ॥

जङ्घा द्वितीया कर्तव्या हस्तत्रितयमुच्छ्रिता ।
भूयोऽपि कूटप्रस्तारं सार्धहस्तं प्रकल्पयेत् ॥ १०९ ॥

जङ्घा तृतीया कर्तव्या पादहीनं करत्रयम् ।
सार्धहस्तसमुत्सेधः कूटप्रस्तार इष्यते ॥ ११० ॥

चतुर्थभूमिजङ्घा च सार्धहस्तद्वयोच्छ्रिता ।
कूटप्रस्तारकं कुर्यात् पूर्वमानेन बुद्धिमान् ॥ १११ ॥

---

१. 'पद्म' इति स्यात् ।

पञ्चम्यां भुवि कुर्वीत (जङ्घा सा?) हि करद्वयम् ।
कुर्वीत कूटप्रस्तारं तथा प्रा(गा?गु)दितो यथा ॥ ११२ ॥

कुर्याद्धस्तद्वयोत्सेधं कपोतमपि बुद्धिमान् ।
चतुर्भागसमुत्सेधा महाघण्टा विधीयते ॥ ११३ ॥

उपरिष्टाद् भवेत् तत्र प्रासादे पञ्चभूमिके ।
कुम्भं तदूर्ध्वं कुर्वीत स्तरानेकोनविंशतिम् ॥ ११४ ॥

संस्थानमेतत् कर्तव्यं सर्वतोभद्रसंज्ञ(कौ?के) ।
विभाजयेद् विशेषेण ततः स्तरविभाजनात् ॥ ११५ ॥

श्रीबन्धपीठं कर्तव्यं सार्धहस्तद्वयोच्छ्रितम् ।
चतुर्दशस्तरं जङ्घा कर्तव्या स्तम्भसंयुता * ॥ ११६ ॥

कर्तव्या द्विस्तरा माला लशुनं स्तरसम्मितम् ।
विदधीत स्तरं पद्मकुम्भगण्डसमन्वितम् (?) ॥ ११७ ॥

उच्छालं द्विस्तरं कुर्या(दिडो?) भागं विधीयते ।
द्विस्तरं हीरकं कार्यं पट्टाश्चैव तथाविधाः ॥ ११८ ॥

पट्टिका स्तरमेकं च वसन्तं द्विस्तरं ततः ।
वसन्तपट्टिका भागं कपोतं त्रिस्तरं ततः ॥ ११९ ॥

छेदमेकस्तरं कुर्यात् स्तरमात्रं च मेठकम् ।
मकरं भागमेकं च भागं (चराल?)पट्टिका(म्) ॥ १२० ॥

कुर्वीत भागिकं छेदं ततः कण्ठं च भागिकम् ।
कण्ठं छेदं ततः कण्ठं च++++भागिकम् ॥ १२१ ॥

(वारुयापट्टिकां?) भागं वेदीं विचक्षणः ।
कुर्वीत भागिकं छेदं ततः कण्ठं स्तरद्वयम् ॥ १२२ ॥

स्तरं स्तरं प्रकुर्वीत पट्टिका पद्मपट्टिका ।
कूटप्रस्तारके कुर्यान्मकराननपञ्चकम् ॥ १२३ ॥

विचित्ररूपं सर्वासु दिक्षु सर्वगुणान्वितम् ।
ऊर्ध्वतः पट्टिकायास्तु घण्टा पञ्चस्तरा भवेत् ॥ १२४ ॥

---

* श्लोकान्ते 'पुनर्भूषणैः' इत्यधिकं पठ्यते ।

नासिकाभिर्विचित्राभिरत्युदाराभिरन्विता ।
भद्राणि यस्य दृश्यन्ते कूटे कूटे समन्ततः ॥ १२५ ॥

स सर्वतोभद्र इति प्रासादः शिल्पिनां मतः ।
अवलम्बेन तदनु स्तम्भच्छेदं प्रकल्पयेत् ॥ १२६ ॥

स्तम्भत + + + त्रेण समानं भुवि सूत्रयेत् ।
मेढस्य निर्गमे दद्यादङ्गुलद्वितयं बुधः ॥ १२७ ॥

पञ्चाङ्गुलानि कर्तव्यस्ततो मकरनिर्गमः ।
सूत्रयेत् समसूत्रेण ततो मेढक(स्य?)पट्टिका ॥ १२८ ॥

षडङ्गुलप्रवेशस्तु कार्यश्छेदस्य धीमता ।
यथा प्रवेश + + + छेदस्यापि तथा भवेत् ॥ १२९ ॥

अङ्गुलद्वितयं कार्यः पट्टिकाया विनिर्गमः ।
विनिर्गमो वेदिकाया विधातव्यः षडङ्गुलः ॥ १३० ॥

अङ्गुलद्वयनिष्क्रान्ता विधेया कण्ठपट्टिका ।
पद्माख्यानिर्गमं कुर्यादङ्गुलत्रितयं ततः ॥ १३१ ॥

अङ्गुलानि ततः पञ्च योनि + निर्गमो भवेत् ।
घण्टा त्विह विधातव्या सर्वालङ्कारभूषिता ॥ १३२ ॥

(भेद?)स्ततः स्याद् भवति भूमिका तस्य चोपरि ।
द्विती(या?य)भूमिकाजङ्घा (सद्यः?) स्यादष्टभिः स्तरैः ॥ १३३ ॥

मालाचैलशुनं चैकं भरणं कलशस्तथा ।
यथा माला तथोच्छालं वीरगण्डं स्तरं भवेत् ॥ १३४ ॥

उच्छालहीरके पट्टसमे कुर्याद् विचक्षणः ।
पट्टिका भागिकोत्सेधा वासन्तं + + का तथा ॥ १३५ ॥

कपोतं त्रिस्तरोत्सेधं (छेदो?) सत्र्यंशवर्जितम् ।
छेदस्यार्धे भवेन्मेढो मकरः पट्टिका तथा ॥ १३६ ॥

ततश्छेदं (च) कण्ठं च + + + पट्टिकां तथा ।
मालार्धेन प्रकुर्वीत च्छेदमेव ततो बुधः ॥ १३७ ॥

पुनः कण्ठं प्रकुर्वीत हीरके(गो?ण) समन्वितम् ।
पट्टि(का) पद्मपूर्वा च त्रिभा(गो?गे)न कपोतके ।। १३८ ।।

कुर्याच्चतुःस्तरां घण्टां द्वाभ्यां कुम्भं तथोपरि ।
पुनश्छेदो भवेद् भागं जङ्घां कुर्वीत सप्तभिः ।। १३९ ।।

(सीतमाठा?) विधातव्या मालो(च्चु?च्चो) द्विस्तरो भवेत् ।
लशुनं भरणं कुम्भो गण्डश्चेति स्तरं स्तरम् ।। १४० ।।

गण्डद्विगुणमुच्छालं हीरपट्टस्तथैव च ।
पट्टिका स्तरमेकं स्याद् वसन्तपट्टिकास्य च ।। १४१ ।।

पीठं द(श)गुणं कुर्याच्छेदमेण्ठौ स्तरं स्तरम् ।
स्तरं कुर्वीत (राकर?) (तथा) मकरपट्टिकाम् ।। १४२ ।।

स्तरं छेदं च कण्ठं च पट्टिकां वेदिकां तथा ।
छेदं कुर्यात् पुनर्भागं कण्ठं तद्द्विगुणं ततः ।। १४३ ।।

पट्टिका स्तरमेकं स्याद् वसन्तपट्टिका स्तरम् ।
चतुःस्तरा भवेद् घण्टा (ग्रागग्राचकभूषिता?) ।। १४४ ।।

तस्योपरि पुनः कुम्भं घण्टार्धेनैव कारयेत् ।
छेदं भागं विजानीयाज्जङ्घा सप्तांशिका स्मृता ।। १४५ ।।

माला द्विभागिका कार्या भागिकं लशुनं भवेत् ।
भरणं कुम्भकं गण्डं कुर्याल्लशुनवद् बुधः ।। १४६ ।।

उच्छालं गण्डकं चैव हीरकान्तं च भागिकम् ।
सार्धं भागं भवेत्++पट्टिकार्धं स्तरं भवेत् ।। १४७ ।।

++तं भागमेकं स्याद् वसन्ताख्या च पट्टिका ।
कपोतं त्रिस्तरं कुर्यान्नासायुक्तं विचक्षणः ।। १४८ ।।

छेदमंशेन कुर्वीत (मॆण्डमंशेन?) कारयेत् ।
मकरे पट्टिकां छेदं विदधीत स्तरं स्तरम् ।। १४९ ।।

कुर्वीत भागिकं (कण्ठं) पट्टिकां वेदिकामपि ।
भागं कुर्यात् पुनश्छेदं ततः कण्ठं द्विभागिकम् ।। १५० ।।

१. 'मकरम्' इति स्यात् । २. 'ग्राग्रीवकविभूषिता' इति स्यात् । ३. 'मेढमंशेन' इति स्यात् ।

पट्टिका पद्मपूर्वा च विधातव्या स्तरं स्तरम् ।
कुर्वीत घण्टामुपरि चतुर्भागां विचक्षणः ॥ १५१ ॥

तदर्धमूर्ध्वतः कुम्भं छेदमर्धेन तस्य च ।
जङ्घा षड्भागिका कार्या (मात्ता गेन सुन कारयेन?) ॥ १५२ ॥

लशुनं भरणं कुम्भं गण्डमुच्छाल(वाड?)के ।
हीरकं चेति कुर्वीत भागिकानि पृथक् पृथक् ॥ १५३ ॥

सार्धभागं भवेत् पट्टः पट्टिकार्धस्तरोच्छ्रिता ।
बसन्तं भागमेकं स्याद् वसन्ताख्या च पट्टिका ॥ १५४ ॥

कपोतं त्रिस्तरं कुर्याच्छेदं (त्र्यंशोनशंसकाम् ?) ।
मण्डको मकरश्चैव पट्टिका छेदकण्ठकौ ॥ १५५ ॥

कण्ठं पट्टी च वेदी च च्छेदश्च स्यात् स्तरं स्तरम् ।
द्वितीयो द्विस्तरः कण्ठो भागिकी पट्टिका भवेत् ॥ १५६ ॥

तथैव पद्मसंज्ञा च स्यादुच्छ्रायेण पट्टिका ।
घण्टां कुर्याच्चतुर्भागां कुम्भमर्धेन तस्य च ॥ १·७ ॥

छेदमेकेन भागेन जङ्घाम+र्धभागिकीम् ।
माला(मे)केन भागेन लशुनं सार्धभागिकम् ॥ १५८ ॥

तथैव भरणं कुर्यात् कुम्भोच्छाले स्तरं स्तरम् ।
हीरकं भागिकं कुर्यात् पट्टं सार्धस्तरं ततः ॥ १५९ ॥

पट्टिकार्धस्तरं कार्या वसन्तं च स्तरं ततः ।
कपोतं द्विस्तरं कुर्याद् वेदीमर्धस्तरं तथा ॥ १६० ॥

यथा छेदस्तथा मण्डो मकरश्च विधीयते ।
पट्टिकार्धस्तरं कार्या छेदोऽप्यर्धस्तरं भवेत् ॥ १६१ ॥

भागं कण्ठः पट्टिका च वेदी कार्या द्विभागिकी ।
छेदो भागेन कर्तव्यः कण्ठश्चान्यस्त्रिभागिकः ॥ १६२ ॥

पट्टिकां पद्मपत्रीं च विदधीत स्तरं स्तरम् ।
तुङ्गस्य चलनं कार्यं द्विभागिकमनन्तरम् ॥ १६३ ॥

घण्टा कार्या समुत्सेधा(त्) त्रयस्त्रिंशद्विभागिकी ।
सर्वतोभद्रसंयुक्ता चन्द्रशालाविभूषिता ॥ १६४ ॥

कुर्वीत त्रिस्तरं पद्मं चित्रपत्रसमन्वितम् ।
तस्योपरि (भवेत्) कुम्भश्चतुर्दशविभागिकः ॥ १६५ ॥

ग्रीवा द्विभागिका कार्या कर्णश्चैव तथाविधः ।
बीजपूरं ततः कार्यं (सा?शो)भासंयुक्तमर्धतः ॥ १६६ ॥

पद्मचक्रं त्रिशूलं वा विधातव्यं यथोचितम् ।
प्रोत्तुङ्गग्राससंयुक्तं ++ मकरमेढकैः ॥ १६७ ॥

सोत्तुङ्गकूटके कुर्यादेवं दिक्षु विदिक्षु च ।
भूमौ भूमौ विधातव्या शाला साध्यलतोरणम् (?) ॥ १६८ ॥

कोणे कोणे च ([1]+करा) भद्रे करि(क्य?क)रानपि ।
++कूटैस्त्रिभिर्युक्तं चतुर्भिश्च जलान्तरैः ॥ १६९ ॥

कुर्वीत सर्वतोभद्रमेवंलक्षणलक्षितम् ।
एवं पद्मो महापद्मः स्वस्तिको वर्धमानकः ॥ १७० ॥

सर्वतोभद्र इत्यते समारभ्यैकभूमिकान् ।
पञ्चभूमिकपर्यन्तं कार्याः साधारणक्रियाः ॥ १७१ ॥

एतैर्विंशतिभागैश्च प्रासादाः पूर्वसूचिताः ।
पीठादारभ्य घण्टान्तं पञ्चैते लक्षणान्विताः ॥ १७२ ॥

षड्भूमिकादि(को?कं) ब्रूमो यावद् द्वादशभूमिकम् ।

पञ्चभूमिकः ॥

अथ षड्भौममेकान्तं त्रिंशद्धस्तं प्रचक्ष्महे ॥ १७३ ॥

चत्वारिंशत्कराः सैकास्तस्योच्छ्रायो विधीयते ।
पीठं प्रकल्पयेत् तस्य सार्धहस्तद्वयोच्छ्रितम् ॥ १७४ ॥

जङ्घा समुच्छ्रये कार्या सार्धहस्तचतुष्टयम् ।
कूटमस्तारमस्याहुः (सो?सा)र्धहस्तोच्छ्रितं बुधाः ॥ १७५ ॥

---

१. 'मकरान्' इति स्यात् ।

जङ्घा द्वितीया तु भवेत् तस्य हस्तचतुष्टयम् ।
द्वितीयकूटस्योत्सेधं सार्धहस्तं प्रकल्पयेत् ॥ १७६ ॥

घण्टा तृतीया चतुरो हस्तास्तार्धाद्विवर्जिता(?) ।
तृतीयकूटप्रस्तारं कुर्याद् भूयोऽपि पूर्ववत् ॥ १७७ ॥

जङ्घा भवेच्चतुर्थी+(स सार्धा त्रे?) करत्रयम् ।
पूर्वमानेन कुर्वीत कूटप्रस्तारमूर्ध्वतः ॥ १७८ ॥

हस्तत्रयं विधातव्या जङ्घोच्छ्रायेण पञ्चमी ।
कूटप्रस्तारकं कुर्यात् सार्धहस्तोच्छ्रितं ततः ॥ १७९ ॥

ष(ष्ठ?ष्ठी) हस्तत्रयं जङ्घा पादहीनं विधीयते ।
प्राग्वत् प्रस्तारकूटं तु कपोतं त्रिकरोच्छ्रितम् ॥ १८० ॥

तस्योपरि भवेद् घण्टा हस्तपञ्चकमुच्छ्रिता ।
कर्तव्यं पद्ममुपरि सुविचित्रं षडङ्गुलम् ॥ १८१ ॥

कुर्याद् भागैकविंशत्या कुम्भमा(त्ररणैतम्?भरणैर्युतम्) ।
षड्भूमिकोऽयमाख्यातः कथ्यते सप्तभूमिकः ॥ १८२ ॥

षड्भूमिकः ॥

पञ्चत्रिंशत्करः प्रोक्तो विस्तारात् स(म?प्त)भूमिकः ।
सार्धत्रिकान्नपञ्चाशत्कर्ण नित्योच्छ्रिता करात्(?) ॥ १८३ ॥

त्रिहस्तं पीठमुत्सेधाज्जङ्घा पञ्चकरोच्छ्रिता ।
सार्धहस्तोच्छ्रितः कूटप्रस्तारो(ऽस्य) विधीयते ॥ १८४ ॥

द्विहस्तो वेदिकाबन्धो जङ्घोच्छ्रायश्चतुष्करः ।
सार्धहस्तसमुत्सेधः कूट(वि?प्र)स्तार इष्यते ॥ १८५ ॥

सार्धहस्तोच्छ्रिता वेदी जङ्घा सार्धकरत्रयम् ।
सार्धहस्तोच्छ्रितः कूट(:?)प्रस्तारः परिकीर्तितः ॥ १८६ ॥

सपादहस्ता वेदी स्याज्जङ्घा (त्र्यंशं?त्र्यंशं) करत्रयम् ।
सार्धहस्तस्तु कूटस्य प्रस्तारः स्यात् समुच्छ्रयात् ॥ १८  ॥

हस्तं स्याद् वेदिकाबन्धो जङ्घांशो हि करद्वयम् ।
सपादहस्तः कूटस्य प्रस्तारो वेदिका करम् ॥ १८८ ॥

पादोनद्विकरा जङ्घा कूटं पादयुतः करः ।
हस्तमात्रोच्छ्रिता वेदी जङ्घा सार्धकरोच्छ्रिता ॥ १८९ ॥

कूटप्रस्तारको हस्तं कपोतः स्यात् करत्रयम् ।
सपञ्जशीर्षघण्टा तु सार्धं स्याद्धस्तपञ्चकम् ॥ १९० ॥

एवमेष समुद्दिष्टः प्रासादः सप्तभूमिकः ।

सप्तभूमिकः ॥

अथाष्टभूमिकं ब्रूमः प्रासादं शुभलक्षणम् ॥ १९१ ॥

चत्वारिंशत्करांस्तस्य विस्तारं परिकल्पयेत् ।
उच्छ्रायः सप्तपञ्चाशत् कराः स्यु(स्त्रि?स्त्र्यं)शवर्जिताः ॥ १९२ ॥

नवहस्तान् प्रकुर्वीत सार्धान् प्रथमभूमिकाम् ।
द्वितीयाष्टौ (सपादोर्धा?)स्तृतीयाष्टौ करान् भवेत् ॥ १९३ ॥

चतुर्थी सप्तहस्ता तु षट्करा पञ्चमी भवेत् ।
पञ्चहस्ता ततः षष्ठी चतुर्हस्ता तु सप्तमी ॥ १९४ ॥

ततोऽष्टमी त्रिहस्ता स्याद् वेदीबन्धः करद्वयम् ।
घण्टां चतुष्करां कुर्यादेवं स्यादष्टभूमिकः ॥ १९५ ॥

अष्टभूमिकः ॥

अथोच्यते हस्तमानात् प्रासादो नवभूमिकः ।
विस्तारादेकपञ्चाशदुच्छ्रित्या स्याद् द्विसप्ततिः ॥ १९६ ॥

कर्णप्रमाणं (तस्योक्ता विस्तारोऽस्य चतुस्त्रिंतिः?) ।
पञ्चहस्ता भवेद् घण्टा वेदिबन्धस्तदर्धतः ॥ १९७ ॥

कुर्याद्धस्तत्रयं सार्धं नवमीमस्य भूमिकाम् ।
अष्टमीं चतुरः सार्धान् सपादान् पञ्च सप्तमीम् ॥ १९८ ॥

षष्ठीं षट् पादहीनांश्च (सपादोनाम?) पञ्चमीम् ।
अष्टौ चतुर्थीं पादोनान् हस्ता(त्राच?) तृतीयकाम् ॥ १९९ ॥

---

१. 'नव' इति पाठ्यं भाति । २. इत उपरि प्रथमद्वितीयभूमिकयोः प्रमाणं मातृकायां न दृश्यते ।

विलोमेनै(कः?ष) कथितः प्रासादो नवभूमिकः ।

नवभूमिकः ॥

इदानीमभिधास्यामः प्रासादं दशभूमिकम् ॥ २०० ॥

एकोनाशीतिरुत्सेधः सपादा विस्तृतिः पुनः ।
षट्पञ्चाशत्कराः कर्णमानाद् ब्रूमोऽथ भागशः ॥ २०१ ॥

एकादशकरोत्सेधा कार्या प्रथमभूमिका ।
सार्धान् दश द्वितीया स्यात् तृतीया तु करान् दश ॥ २०२ ॥

सार्धानष्टौ चतुर्थी तु सप्त(सार्धस्व?र्धास्तु) पञ्चमी ।
षष्ठी सप्तकरा प्रोक्ता सप्तमी षट्करा भवेत् ॥ २०३ ॥

पञ्चहस्ताष्टमी ज्ञेया नवमी तु चतुष्करा ।
त्रिहस्ता दशमी कार्या वेदी सांशं करद्वयम् ॥ २०४ ॥

++++ प्रमाणेन सार्धं करचतुष्टयम् ।
एवमेष समुद्दिष्टो विन्यासो दशभूमिके ॥ २०५ ॥

दशभूमिकः प्रासादः ॥

ब्रूमः (समासादभीथै[1])कादशभूमिकम् ।
पञ्चषष्टिकरः कार्यो द्विनवत्युच्छ्रित(श्च) सः ॥ २०६ ॥

कर्णमानेन विज्ञेयः प्रासादः शास्त्रवेदिभिः ।
प्रथमा भूमिका तस्य चतुर्दशकरा भवेत् ॥ २०७ ॥

द्वितीया द्वादशार्धं च तृतीयैकादशोच्छ्रिता ।
नव सार्धाश्चतुर्थी स्यात् सपादानष्ट पञ्चमी ॥ २०८ ॥

सप्तहस्ता भवेत् षष्ठी षड्ढस्ता सप्तमी ततः ।
पञ्चहस्ताष्टमी सार्धाश्चतुरो नवमी करान् ॥ २०९ ॥

चतुर्हस्ता तु दशमी सार्धमेकादशी त्रयम् ।
सपादद्विकरा वेदी घण्टा सार्धचतुष्क(सा?रा) ॥ २१० ॥

प्रासादः कथितः सम्यगित्येकादशभूमिकः ।

एकादशभूमिकः ॥

ब्रूमो द्वादशभौमं स सप्तषष्टिकरायतः ॥ २११ ॥

---

१. 'समासाद् प्रासादमथै' इति स्याद् ।

उच्छ्रायात् पञ्चनवतिहस्तः स्यात् कर्णमानतः ।
आद्या चतुर्दशकरा भूमिकास्य विधीयते ॥ २१२ ॥

द्वितीयैकादशकरा(न्) तृतीयार्धयुता(न्) दश ।
दश हस्तांश्चतुर्थी स्यादष्टौ सार्धास्तु पञ्चमी ॥ २१३ ॥

सार्धसप्तकरा षष्ठी सप्तहस्ता च सप्तमी ।
अष्टमी षट्करा पञ्चहस्ता तु नवमी भवेत् ॥ २१४ ॥

दशमी स्याच्चतुर्हस्ता त्रिहस्तैकादशी क्षितिः ।
द्वादशी द्वौ करौ सार्धौ वेदीबन्धः करद्वयम् ॥ २१५ ॥

चतुर्हस्ता भवेद् घण्टा सर्वालङ्कारभूषिता ।
स्तम्भकर्णस्य मानेन कुम्भं कुर्याद् विचक्षणः ॥ २१६ ॥

उच्छालं द्विगुणं स्तम्भात् (हीरसार्धसद्गुणाम्[1]?) ।
इत्येते[2] द्राविडाः सम्यक् प्रासादा द्वादशोदिताः ॥ २१७ ॥

एषां पद्ममहापद्मस्वस्तिका वर्धमानकः ।
सर्वतोभद्र (लैता?)स्तलबन्धान् निवेशयेत् ॥ २१८ ॥

(आरभ्यन्तामेरेकस्या[3] च?) द्वादशभूमिका(त्) ।
ऊर्ध्वमानं च कर्तव्यं सामान्यं तेषु पञ्चसु ॥ २१९ ॥

द्वादशभूमिकः ॥

(पीठमूल[4]?)च्छन्दकभूमिकाभि-
विनिर्मिता द्राविडनामधेयाः ।
प्रासादमुख्याः कथिता(यथा यथा-
वेत्यं स्वलिपविभिरुच्यतेऽसौ ?) ॥ २२० ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
द्राविडप्रासादाध्यायो नाम द्विषष्टितमः ॥

———:0:———

१. 'हीरं सार्धगुणान्वितम्' इति स्यात् । २. 'इत्येतां' इति पाठः स्यात् ।
३. 'आरभ्य भूमेरकस्या आ च' इति स्यात् । ४. 'पीठैस्तल' इति स्यात् ।

# अथ मेर्वादिविंशिकानागरप्रासादलक्षणं नाम त्रिषष्टितमोऽध्यायः ।

—:o:—

अधुना नागरान् ब्रूमः प्रासादान् नामलक्षणैः ।
मेरुमन्दरकैलासाः कुम्भोऽथ मृगराड् गजः ॥ १ ॥

विमानच्छन्दसंज्ञश्च चतुरश्रस्तथापरः ।
अष्टाश्रिः षोडशाश्रिश्च वर्तुलः सर्व(तोद?भद्र)कः ॥ २ ॥

सिंहास्यो नन्दनो नन्दिवर्ध(मा?)नो हंसको वृषः ।
(गुरुत्सा?गरुडः) पद्मकाख्यश्च समुद्र इति विंशतिः ॥ ३ ॥

नागराणामिति प्रोक्ता प्रासादानां समासतः ।
शत(मुद्र?)श्चतुर्द्वारः षोडशक्षितिरूर्ध्व(तः) ॥ ४ ।

विचित्रशिखराकीर्णो मेरुः प्रासाद उच्यते ।
मन्दरो द्वादशतलः कैलासो नवभूमिकः ॥ ५ ॥

अनेकशिखरश्चित्रश्चतुर्द्वारो महोच्छ्रितिः ।
विमानच्छन्दकस्त्वष्टभूमिकः परिकीर्तितः ॥ ६ ॥

विंशत्यण्डकसंयुक्तः सप्तभूर्नन्दिवर्धनः ।
षड्भूमिर्नन्दनः कार्यः प्रासादः षोडशाण्डकः ॥ ७ ॥

पञ्चभूः सर्वतोभद्रो भद्रशालाविभूषितः ।
अनेकशिखराकीर्णः कर्तव्यः प्रचुराण्डकः ॥ ८ ॥

वलभिच्छन्दकः कार्यो देवतानां (ए?)वृषः सदा ।
वृषस्तु स्वोच्छ्रितेस्तुल्यः सर्वतः स्वस्ति वर्तितः ॥ ९ ॥

मण्डलं (?) स तु विज्ञेय एकाण्डकविभूषितः ।
सिंहः सिंहाकृतिर्ज्ञेयो गजो गजसमाकृतिः ॥ १० ॥

कुम्भः कुम्भाकृतिस्तद्वद् भूमिकानवकोच्छ्रितः ।
अञ्जलीपुटसंस्थानः पञ्चाण्डकविभूषितः ॥ ११ ॥

षोडशाश्रिः समन्ताच्च विज्ञेयः स समुद्गकः ।
पार्श्वयोश्चन्द्रशाला च उच्छ्रायात् स द्विभूमिकः ॥ १२ ॥

तथाष्टाश्रिः पद्मनिभो भूमिकात्रयमुच्छ्रितः ।
षोडशाश्रिः स विज्ञेयो विचित्रशिखरः शुभः ॥ १३ ॥

मृगराजस्तु विख्यातश्चन्द्रशालाविभूषितः ।
प्राग्ग्रीवेण विशालेन भूमिका(स यदु?सु य उ)च्छ्रितः ॥ १४ ॥

अनेकचन्द्रशालस्तु गजः प्रासाद उच्यते ।
पर्यस्तो मृगराजस्तु गरुडो नाम नामतः ॥ १५ ॥

सप्तभूम्युच्छ्रितस्तद्वच्चन्द्रशालात्रयान्वितः ।
अश्रिभि([1]र्बिहरं तस्य?) षड्भिर्युक्तः समन्ततः ॥ १६ ॥

स्यादन्यो गरुडस्तद्वदुच्छ्राये दशभूमिकः ।
पद्मकः षोडशाश्रिः स्याद् भूमिकाद्वितयाधिकः ॥ १७ ॥

पद्मतुल्यप्राणन(?)वाद्वक्षश्चतुरश्रकः ।
पञ्चाण्ड(मे?ए)कभूमिस्तु ग(र्भ?र्भो) हस्तचतुष्टयम् ॥ १८ ॥

वृषो भवति ना([2]त्रायं?)प्रासादः सर्वकामिकः ।
सप्तकापञ्चकाभूमिप्रासादो(?)य इहोदिताः ॥ १९ ॥

([3]हिंस्य?)ते समा ज्ञेया ये चान्ये तत्प्रमाणकाः ।
विचित्रशिखराः कार्याश्चन्द्रशालाविभूषिताः ॥ २० ॥

सर्वे प्राग्ग्रीवसंयुक्ताः कर्तव्यास्तोरणान्विताः ।
ऐष्टिका दारवा यद्वा शैलजा वाजनाकुलाः ॥ २१ ॥

स्यात् पञ्चाशत्करान्मेरुसूत्रालिङ्गं नवोदयान् (?) ।
गर्भास्तु द्विगुणा लिङ्गाद् भित्तयः स्युश्चतुष्कराः ॥ २२ ॥

अन्धारिका हस्तषट्कं विधातव्या समन्ततः ।
अन्धारिकां न कुर्वीत बाह्यभित्तिं विचक्षणः ॥ २३ ॥

अयं साधारकः प्रोक्तो मेरुः सर्वगुणान्वितः ।
प्रासादानां तथान्येषां गर्भो (लिङ्गदिशंगुणः?) ॥ २४ ॥

---

१. 'र्बहिरन्तश्च' इति स्यात् । २. 'म्नायं' इति स्यात् । ३. 'हंसस्य' इति पाठः स्यात् ।

प्रासादगर्भमुत्सृष्टं यच्छेषं तेन कल्पयेत् ।
सहान्धारिकया स(र्वां?र्वं) समभागेन पूर्ववत् ॥ २५ ॥

मे(वा?र्वा)द्या ये विमानान्ताः (स+?)पूर्वं[1] प्रकीर्तिताः ।
शस्तास्ते (मृज्य?)लिङ्गानामन्येषां तु भयाव(हम्?हाः) ॥ २६ ॥

वाटृक्षमुख्या ये तूक्ता नन्दिवर्धनपश्चिमाः ।
(तष्टो?तेऽष्टौ) शुभा मध्यमानामन्येषां दुःखदाः स्मृताः ॥ २७ ॥

हंसादयः समुद्रान्ताः पञ्च ये समुदाहृताः ।
प्रशस्तास्ते समुदिष्टा लिङ्गानां (त्रिधीयसा?) ॥ २८ ॥

मन्दरस्तु करात् कार्यश्चत्वारिंशत्तु +++ ।
++++++लासो विमानोपरोष्टिताः (?) ॥ २९ ॥

हस्तद्वात्रिंशता कार्यः प्रासादो नन्दिवर्धनः ।
हस्तांस्तु नन्दनस्त्रिंशत् सर्वतोभद्र एव च ॥ ३० ॥

अष्टाविंशतिमष्टा(भिः?भिः) षोडशा(भि)स्त्रिभिर्विना ।
वर्तुलः पद्मकः श्वेतो विमानच्छन्द एव च ॥ ३१ ॥

एते द्वादशहस्ताः+कार्या विंशतिहस्तको (?) ।
गजः सिंहश्च कुम्भश्च वलभीछन्द(क)स्तथा ॥ ३२ ॥

चत्वार एते तुल्याः स्युर्हस्तोन्मेडसमानतः (?) ।
वाटृक्षो मृगराजश्च विमानच्छन्द एव च ॥ ३३ ॥

एते द्वादशहस्ताः(स्युः) प्रमाणेन पृथक् पृथक् ।
दशहस्तो भवेद् वा स गरु(ते?डोऽ)ष्टकरः स्मृतः ॥ ३४ ॥

एतैः प्रमाणैः प्रासादा(न्) कुर्यादित्यपरे स्थिताः ।
एकहस्ता द्विहस्ताश्च (त्रि)हस्ता ये च कीर्तिताः ॥ ३५ ॥

यक्षनागग्रहादीनां विधेया रक्षसां च ते ।
विधिरेष समुद्दिष्टः प्रासादानां समासतः ॥ ३६ ॥

विशेषेण पुनर्ब्रूमो विमानं शुद्धपुष्पकम् ।
चतुरश्रीकृते क्षेत्रे पञ्चत्रिंशद्विभाजिते ॥ ३७ ॥

---

१. 'सत' इति स्यात् ।

रथिका पञ्चभागा स्याद् द्विभागं सलिलान्तरम् ।
(कूट?)त्रिभागं पञ्जरं कुर्यात् प्राग्ग्रीवकविभूषितम् ॥ ३८ ॥

जलान्तरं द्वितीयं तु तदपि स्याद् द्विभागिकम् ।
शालैकादशभागा तु पूर्ववत् सलिलान्तरम् ॥ ३९ ॥

त्रिभागं पञ्जरं कुर्याद् द्विभागं सलिलान्तरम् ।
कूटं पञ्चकरं प्रान्ते दिक्षु सर्वास्वयं विधिः ॥ ४० ॥

नागरोऽयं तलच्छन्दः प्रासादे शुद्धपुष्पके ।
जङ्घा सपीठा क्षेत्रार्धविस्तारसदृशोदया ॥ ४१ ॥

सार्धैर्द्वितीया दशभिस्तृतीया नवभिः करैः ।
अष्टहस्ता चतुर्थी स्यात् सप्तहस्ता तु पञ्चमी ॥ ४२ ॥

षष्ठी तु भूमिका कार्या प्रमाणेनास्य षट्करा ।
सप्तमी पञ्चहस्ता तु (चतु)र्हस्ता ततोऽष्टमी ॥ ४३ ॥

त्रिहस्तं वेदिकाबन्धं विचित्रं कारयेद् बुधः ।
विस्ताराद् द्विगुणोच्छ्रायः स्कन्धोऽयं (वेदिकाबन्धः?) ॥ ४४ ॥

स्कन्धादूर्ध्वं भवेद् घण्टा यदि वामलसारकम् ।
तद् वर्तुलं शुभं कार्यं घण्टा स्कन्धार्धमुच्छ्रिता ॥ ४५ ॥

घण्टाविस्तार(तः) कुम्भं चतुर्थांशेन कारयेत् ।
प्रमाणं समुदायेन भूमिकानामुदाहृ(ता?तम्) ॥ ४६ ॥

एकैक(स्या?स्य)विशेषेण प्रविविच्याधुनोच्यते ।
प्रमाणेन विधातव्या (खकारा?)भूमिरङ्गिका ॥ ४७ ॥

(यं हस्तं तु?) खुरकं द्विभागा पद्मपत्रिका ।
भागिका (कणकयास्त्र्यंशं?) कुमुदं छेद एव च ॥ ४८ ॥

त्र्यंशस्तद्द्विगुणः कण्ठः किङ्किणीपल्लवान्वितः ।
तस्यार्धं पट्टिका कार्या तत्समा गिरिपत्रिका ॥ ४९ ॥

(भात्र्यंशावरण्डीतमध्ये पच्छीतलार्धभागिकी?) ।
पूर्वप्रोक्तेन कण्ठेन समसूत्रा च सा भवेत् ॥ ५० ॥

छेदं तदूर्ध्वं कुर्वीत स्तरमेकं विचक्षणः ।
पुनः कण्ठः प्रदातव्यो भागद्वितयसम्मितः ॥ ५१ ॥

पट्टिका स्तरमेकं तु तत्समा गिरिपत्रिका ।
चतुर्गुणाथ त्रिगुणा कार्या(त्रि?ति)लकनासिका ॥ ५२ ॥

स्तम्भद्वितयमध्ये तु पञ्चाल्यं कर्म कारयेत् ।
शोभनं तत्तु कर्तव्यं युक्तं तिलकना(म?स)या ॥ ५३ ॥

पुनश्छेदः प्रदातव्यः पूर्वमानेन धीमता ।
जङ्घा सप्तस्तरा मेठा वरण्डी त्रिस्तरोर्ध्वतः ॥ ५४ ॥

भवेदधस्ताज्जङ्घायास्त्रिस्तर(स्तरल?)कुम्भकः ।
घण्टा(प?म)ण्टपसंयुक्ता माला स्यात् (पद्मरात्?) ततः ॥ ५५ ॥

अर्धेन तस्या लशुनं स्तरेण भरणं भवेत् ।
कुर्वीत द्विस्तरं कुम्भं गण्डमेकस्तरं ततः ॥ ५६ ॥

उच्छालं द्विस्तरं कुर्याद् वीरगण्डं ततः स्तरम् ।
द्विस्तरः स्यात् ततः (पट्टः) पट्टस्यार्धेन पट्टिका ॥ ५७ ॥

तत्समा गिरिपत्री च वरण्डी त्रिस्तरा ततः ।
स्तम्भस्योर्ध्वं विधातव्या मनोज्ञा (त्र्य?द्य)र्धपादिका ॥ ५८ ॥

स्तरमेकं ततश्छेदस्ततः कण्ठः स्तरत्रयम् ।
पट्टिका स्तरमेकं स्यात् तत्समा गिरिपत्रिका ॥ ५९ ॥

वरण्डीं त्रिस्तरां कुर्यादर्धप्र(स?स्त)रसंयुतम् ।
पुनश्छेदः स्तरं कार्यः कण्ठस्तेन समस्ततः ॥ ६० ॥

तत्समा गिरिपत्री च त्र्यंशमामलसारकम् ।
ततश्छेदं च कण्ठं च गिरिपत्रीं वरण्डिकाम् ॥ ६१ ॥

पूर्वमानेन कुर्वीत च्छेदकम्पे तथा पुनः ।
गिरिपत्रीं स्तरं कुर्यात् (त्र्यंशक्षुरकंततः?) ॥ ६२ ॥

छेदं कण्ठं पत्रिकां च (प्रास्तरमेकं ततश्छेदकं कुर्यात् पुनर्बुधः?) ।
वरण्डीं त्रिस्तरां कुर्यादर्धप्रस्तरसंयुतम् ॥ ६३ ॥

---

१. 'षट्स्तरा' इति स्यात् । २. 'त्र्यंशेन खुरकं ततः' इति स्यात् ।

छेदं कण्ठं च पीठं च (प्राग्वदामलसारकंण्ठं कुर्यात् तथापरम्?) ।
पूर्ववद् गिरिपत्रीं च द्विस्तरां वेदिकां ततः ॥ ६४ ॥

छेदं कुर्यात् तदर्धं च ततः कण्ठं स्तरद्वयम् ।
गिरिपत्रीं ततः कुर्यात् स्तरमेकं सुशोभनाम् ॥ ६५ ॥

चतुरश्रप्रमाणं च कुर्यादामलसारकम् ।
पद्मपत्रं तु तस्यार्धमुपरिष्टात् प्रकल्पयेत् ॥ ६६ ॥

चतुःस्तरो भवेत् कुम्भः स्तरं कण्ठस्ततो भवेत् ।
स्तरमेकं ततः कर्णो द्विस्तरं बीजपूरकम् ॥ ६७ ॥

चतुर्भिः कूटविस्तारं ततो (भागे विराजयेत्?)[1] ।
द्विभागं मञ्जरी कार्या (स्त?शू)रसेनैरलङ्कृता ॥ ६८ ॥

वरण्डिकाख्यो बन्धश्च भागं भागं (भागं?) भवेत् ततः ।
विस्ता(रं?राद्) मूलमञ्जर्याः शुकनासां प्रकल्पयेत् ॥ ६९ ॥

अथ निर्णीयते द्व्यर्धपादाख्यं तत्र विस्तृतिः ।
उच्छ्रायाद् द्विगुणा कार्या पञ्चभागक्रमोऽथवा ॥ ७० ॥

शूरसेनोऽथवा कार्यः शु(क)नासात्रि(वे?धे)त्यसौ ।
कृत्वा त्रिभागमुच्छ्रायं (च?म)करं चोर्ध्वभागिकम् ॥ ७१ ॥

स्तम्भयुक्तं शुणद्वारं (स्योतस्योधिः संप्रताम् ?) ।
अर्धप्र(श?)स्तरसंयुक्तं कुर्यात् + पार्श्वयोर्द्वयोः ॥ ७२ ॥

कर्तव्यं गर्भकूटं वा शुभं तत्र विपश्चिता ।
द्वितीयभूमिकायां तु पीठं सा(स्त?र्ध)दशस्तरम् ॥ ७३ ॥

(मेलान्ततोवती?) जङ्घा माला कार्या चतुःस्तरा ।
लशुनं द्विस्तरं प्रोक्तं स्तरं भरणमिष्यते ॥ ७४ ॥

कुम्भं(?) तद्वत् प्रकर्तव्यमुच्छालं द्विगुणान्वि(तः?तम्) ।
गण्डकः स्तरमेकं स्यात् ततः पट्टः स्तरद्वयम् ॥ ७५ ॥

अर्धेन पट्टिका कार्या तथैव गिरिपत्रिका ।
(सू?स्त)रत्रयं वरण्डी स्याच्छूरसेनैरलङ्कृता ॥ ७६ ॥

---

१. 'भागैर्विभाजयेत्' इति पाठः स्यात् ।

स्तरमेकं भवेच्छेदस्ततः कण्ठः स्तरद्वयम् ।
पट्टिका भागमेकं च तत्समं गिरिपत्रिका ॥ ७७ ॥

त्रिभागं शिखरं कुर्याच्छेदं मे(रु?)तु भागिकम् ।
एकं कण्ठं प्रकुर्वीत (पथिकां गिस्तरं?)[1] विदुः ॥ ७८ ॥

स्तरमेकं भवेत् कण्ठः पट्टिकापि च तत्समा ।
गिरिपत्रीं च कुर्वीत भागार्धेन विचक्षणः ॥ ७९ ॥

(द्वा?ध्य)र्धपादिकया युक्ता त्रिस्तरा स्याद् वरण्डिका ।
छेदं कण्ठं च कुर्वीत पूर्वमानेन बुद्धिमान् ॥ ८० ॥

पट्टिका गिरिपत्री च भागं भागं विधीयते ।
द्विस्तरं शिखरं कुर्या(त् तथा) छेदं तु भागिकम् ॥ ८१ ॥

एवं कण्ठं प्रकुर्वीत +++++ पट्टिकाम् ।
वरण्डिका (द्विभास्योद्दकारेण?) समन्विता ॥ ८२ ॥

छेदं कण्ठं च पत्री च गिरिवर्ती त्रिभागिका(?) ।
प्राग्वद् (विरिहिर?)कुर्याद् यथाशोभं प्र +++ ॥ ८३ ॥

चतुर्थी भूमिका चोर्ध्वं कर्तव्या लक्षणान्विता ।
त्रयोदशस्तरं पीठं मध्यजङ्घा च तत्समा ॥ ८४ ॥

चतुःस्तरा भवेन्माला तदर्धं लशुनं ततः ।
कुम्भं तेन समं (कार्यमु?कुर्यादु)च्छालं द्विस्तरं भवेत् ॥ ८५ ॥

तस्यार्धे गण्डकं कुर्यात् पट्टं तद्द्विगुणं ततः ।
पट्टिका गिरिपत्री च विधातव्ये स्तरं स्तरम् ॥ ८६ ॥

वरण्डी त्रिस्तरा कार्या छेदमेकस्तरं विदुः ।
कुर्वीत द्विस्तरं कण्ठं तदर्धेन तु पट्टिकाम् ॥ ८७ ॥

तत्समां गिरिपत्रीं द्वौ स्तरौ (खिरिहिरं?) ततः ।
छेदः कण्ठः पट्टिका च गिरिपत्रीति भागिकाः ॥ ८८ ॥

वरण्डी द्विस्तरा कार्या ततश्छेदः स्तरं भवेत् ।
कण्ठश्च पत्रिका चेति गिरिपत्रीति भागिकाः ॥ ८९ ॥[2]

---

१. 'रथिकां त्रिस्तरां' इति स्यात् । २. 'छेदः कण्ठश्च पत्री च गिरिपत्रीति भागिकाः' इति स्यात् ।

(प्राग्वक्राशिखिरिहिरं) कुर्याच्छेदं पूर्वक्रमेण च ।
द्विस्तरा तिलनासा (तु) विधातव्या विपश्चिता ॥ ९० ॥

कुर्वीत भागिकं छेदं ततः क(ण्ठा?ण्ठं) द्विभागि(की?कम्) ।
पट्टिकां भागमेकं च तत्समां गिरिपत्रिकाम् ॥ ९१ ॥

घण्टा सप्तस्तरा प्रोक्ता पद्मं द्विस्तरमुच्यते ।
द्विगुणः कलशस्तस्यां छेदं पूर्ववदाचरेत् ॥ ९२ ॥

ऊर्ध्वं स्यात् पञ्चमी भूमिः पीठमेकादशस्त(तः?र)म् ।
तद्व(न्मेद्रा?)[2] भवेज्जङ्घा माला च त्रिस्तरा ततः ॥ ९३ ॥

सार्धस्तरं स्याल्लशुनं स्तरेण भरणं भवेत् ।
कुम्भं गण्डकसंयुक्तं कुर्यात् सार्धस्तरं बुधः ॥ ९४ ॥

उच्छालं द्विस्तरं प्रोक्तं स्तरं गण्डो विधीयते ।
द्विस्तरः स्यात् (तरः?) पट्टः पट्टस्यार्धेन पट्टिका ॥ ९५ ॥

तत्समा गिरिपत्री च त्रिस्तरा तु वरण्डिका ।
स्तरमेकं भवेच्छेदः कण्ठस्तद्द्विगुणस्ततः ॥ ९६ ॥

तदर्धं पट्टिका कार्या तथैव गिरिपत्रिका ।
स्तर(कं?)द्वयं विरिढिरं तदर्धं छेदमाचरेत् ॥ ९७ ॥

एवं कण्ठः पट्टिका च स्यात् तथा गिरिपत्रिका ।
द्वौ स्तरौ तिलनासा स्याच्छेदः सार्धक(रो?रा)यतः ॥ ९८ ॥

कण्ठं तद्द्विगुणं कुर्याद् भागेनैकेन पट्टिकाम् ।
तत्समा गिरिपत्री स्याद् घण्टा पञ्चस्तरा भवेत् ॥ ९९ ॥

कुर्वीत द्विस्तरं पद्मं शेषं पूर्वक्रमात् ततः ।
ततो भूमिर्भवेत् षष्ठी पीठं तत्राभिधीयते ॥ १०० ॥

द्विस्तरा भूमिरङ्गा स्या(तु[3]ल?)खुरकस्ततः ।
छेदो भवेत् तदर्धेन ततः कण्ठः स्तरद्वयम् ॥ १०१ ॥

पट्टिका भागमेकं स्याद् भागं च गिरिपत्रिका ।
वरण्डीं द्विस्तरां कुर्यात् तदर्धं छेदमादिशेत् ॥ १०२ ॥

---

१. 'प्राग्वत् खिरिहिरं' इति स्यात् । २. 'न्मेढा' इति स्यात् । ३. 'तत्तुल्यः' इति स्यात् ।

द्वादशां(श)मि(दं?तं) पीठं जङ्घा (माद्दा?) तदर्धतः ।
माला तु द्विस्तरा प्रोक्ता लशुनं तत्समं भवेत् ॥ १०३ ॥

भरणं स्तरमेकं तु द्विभागः कलशो भवेत् ॥ ।
उच्छालकं च तत्तुल्यं गण्डो भागं विधीयते ॥ १०४ ॥

कुर्वीत द्विस्तरं पट्टं भागेनैकेन पट्टिकाम् ।
पूर्ववद् गिरिपत्रीं + + स्तरां तु वरण्डिकाम् ॥ १०५ ॥

स्तरमेकं भवेच्छेदः कण्ठस्तद्द्विगुणस्ततः ।
पूर्ववत् पत्रिके द्वे तु द्व्यंशं खिरिहिरं भवेत् ॥ १०६ ॥

छेदः कण्ठः पट्टिका च गिरिपत्रीति भागिकाः ।
द्विस्तरा तिलनासा स्याच्छेदः कार्यस्तु भागिकः ॥ १०७ ॥

द्विस्तरः स्यात् ततः कण्ठो भागिका कण्ठपट्टिका ।
भागिकी गिरिपत्री च विधातव्या ततः परम् ॥ १०८ ॥

पञ्चस्तरा(न्) त्रिभागोना(न्) कुर्यादामलसारकम् ।
त्रिस्तरं स्यात् ततः + + शेषं पूर्वक्रमाद् भवेत् ॥ १०९ ॥

पञ्चम्यां भूमिकायां तु पीठं स्याद् द्वादशस्तरम् ।
जङ्घा पञ्चस्तरा मेठा माला च स्याद् द्विभागिकी ॥ ११० ॥

अर्धस्तरेण लशुनं स्तरेण भ(रं?रणं) भवेत् ।
कुम्भं गण्डेन सहितं स्तरं कुर्याद् विचक्षणः ॥ १११ ॥

उच्छालं द्विस्तरं कुर्याद् गण्डो भागं विधीयते ।
पट्टः सार्धस्तरः कार्यः पट्टिका तु स्तरं भवेत् ॥ ११२ ॥

तत्समा गिरिपत्री च त्रिस्तरा तु वरण्डिका ।
छेदो [1]भागत्रिभोगं कण्ठस्यार्धे गुणस्ततः(?) ॥ ११३ ॥

पत्रिके द्वे तु भागिक्यौ + स्तरा तिलनासिका ।
अर्धप्रस्तारयुक्तासौ कार्याथ प्रस्तरान्विता ॥ ११४ ॥

छेदं भागेन कुर्वीत कण्ठं तद्द्विगुणं ततः ।
(अर्धप्रस्तरं?) पूर्ववत् पत्रिके द्वे तु घण्टा स्तरचतुष्टयम् ॥ ११५ ॥

---

१. 'भागं त्रिभागोनं कण्ठश्चार्धगुणस्ततः' इति स्यात् ।

कुर्वीत द्विस्तरं पद्मं शेषं पूर्वक्रमेण तु।
अष्टमी भूमिका या तु सा कार्या शुभलक्षणा ॥ ११६ ॥

मेर्वादयो विंशतिरेवमुक्ताः
प्रासादमुख्याः [1]+ + + + + + +।
भूम्यष्टकान्तास्तदिमान् विदध्यात्
स्याच्छिल्पिनां संसदि पूजनीयः ॥ ११७ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
मेर्वादिविंशिकानागरप्रासादभूमिजा नामाध्यायस्त्रिषष्टितमः ॥

———:o:———

# अथ दिग्भद्रादिप्रासादलक्षणं नाम चतुष्षष्टितमोऽध्यायः।

———:o:———

प्रासादमथ ([2]वीरोयं?) वक्ष्यामो नामलक्षणैः।
लक्षणै(?)स्तेषु दिग्भद्रः श्रीवत्सो वर्धमानकः ॥ १ ॥

नन्द्यावर्तश्चतुर्थः स्यात् पञ्चमो नन्दिवर्धनः।
विमानश्च तथा पद्मो महाभद्राख्य एव च ॥ २ ॥

श्रीवर्धमानकाख्यश्च महा(पद्म[3]तोऽपि वा?)।
एकादशः पञ्चशालो द्वादशः पृथिवीजयः ॥ ३ ॥

तत्र प्रागेव ([4]दिग्भद्रः श्रावणं?) प्रतिपाद्यते।
चतुरश्रीकृते क्षेत्रे नवभागविभाजिते ॥ ४ ॥

कोणो द्विभागविस्तारः प्रत्यङ्गौ भागिकौ स्मृतौ।
शाला भागत्रया कार्या नासिकात्रयशोभिता ॥ ५ ॥

परस्परं विनिष्क्रासमर्धभागेन कारयेत्।
कोणप्रत्यङ्गयोरन्तः शालाप्रत्यङ्गयोस्तथा ॥ ६ ॥

षोडशांशेन कुर्वीत + + + सलिलान्तरम्।
सीमा(स्याद्?स्य) दशभिर्भागैः प्रविभज्य विधीयते ॥ ७ ॥

---

१. 'शुभलक्ष्मयुक्ताः' इति स्यात्। २. 'वाराटम्' इति स्यात्। ३. 'पद्माभिधोऽपिवा' इति स्यात्। ४. 'दिग्भद्रलक्षणम्' इति स्यात्।

++का गर्भपादैः षड् भित्तयः स्युर्द्विभागिकाः ।
(वर्धमानेनमथ ब्रूमोः) विस्ताराद् द्विगुणं हि तत् ॥ ८ ॥

द्वौ भागौ वेदिकाबन्धो जङ्घा ज्ञेया चतुष्पदा ।
(शान्तापत्रा[1]) कपोताली सार्धभागं समुच्छ्रिता ॥ ९ ॥

सार्धभागसमुच्छ्राया कार्या प्रथमभूमिका ।
द्वितीया भूमिका ज्ञेया सार्धभागत्रयोदया ॥ १० ॥

तृतीया च विधेया स्यात् सार्धभागद्वयोच्छ्रिता ।
उच्छालकं च जङ्घा च भूमिकार्धे विधीयते ॥ ११ ॥

कूटं (तैः) चार्धतो देयं कर्मशोभासमन्वितम् ।
घण्टा भागत्रयोत्सेधा बहुभिश्चाश्रिभिर्युता ॥ १२ ॥

कलशं स्थापयेदूर्ध्वं भागद्वयसमुच्छ्रितम् ।
बीजपूरकसंयुक्तं वर्तुलं पल्लवावृतम् ॥ १३ ॥

शिखरार्धस्य कुर्वीत सपादमुदयं तथा ।
इमं दिग्भद्रसंज्ञं यः प्रासादं कारयेत् पुमान् ॥ १४ ॥

शतक्रतुफलं सोऽपि लभते नात्र संशयः ।
लक्ष्म श्रीवत्ससंज्ञस्य प्रासादस्याभिधीयते ॥ १५ ॥

चतुरश्रीकृते क्षेत्रे भक्ते पञ्चदशांशकैः ।
(अस्योच्छ्रायो सकास्त्र्यंशस्त्वं क्षोणस्यादंशकैस्त्रिभिः?) ॥ १६ ॥

कर्णशालान्तरे कार्यौ द्व्यंशौ प्रतिरथावुभौ ।
(तयोरुभयोः सार्धं सादं तु मार्ग्रो निवेशयेत्?) ॥ १७ ॥

भागमेकं प्रविष्टौ च शाला भागत्रयात्मिका ।
निर्गमः स्यात् पदार्धेन गर्भस्तु नवभागिकः ॥ १८ ॥

त्रिपदा च भवेद् भित्तिरूर्ध्वमस्याथ कथ्यते(?) ।
श्रीवत्सः कीर्तितः सम्प्रत्युच्यते वर्धमानकः ॥ १९ ॥

चतुरश्रीकृते क्षेत्रे +++ भागकल्पितम् ।
छेदादि गिरिपत्र्यन्तं दद्यात् पूर्वक्रमेण(तु) ॥ २० ॥

---

1. 'शतपत्रा' इति स्यात् ।

द्विस्तरा त्रिस्तरा चापि कर्तव्या वेदिका (न?म)ता ।
स्तरमेकं भवेच्छेदः कण्ठस्तद्द्विगुणो भवेत् ॥ २१ ॥

पट्टिकां गिरिपत्रीं च तस्यैवार्धेन कारयेत् ।
दशस्तरा ततो घण्टा यदिवामलसारकम् ॥ २२ ॥

द्विस्तरं स्यात् ततः पद्मं द्विगुणः कलशस्ततः ।
तदूर्ध्वं भूमिका कार्या सपीठा लक्षणान्विता ॥ २३ ॥

स्तरैः स्यात् पञ्चदशभिः पीठं जङ्घापि तावता ।
चतुःस्तरा भवेन्माला लशुनं तु स्तरद्वयम् ॥ २४ ॥

तस्या(ध्य)र्धेन भरणं कुम्भं कुर्वीत तत्समम् ।
तस्य द्विगुणमुच्छालं गण्डमेकस्तरं भवेत् ॥ २५ ॥

पट्टं द्विगुणमेतस्मात् कुर्यादर्धेन पट्टिकाम् ।
पट्टिकायाः प्रमाणेन कर्तव्या गिरिपत्रिका ॥ २६ ॥

वरण्डी त्रिस्तरा कार्या शूरसेनैरलङ्कृता ।
एकस्तरस्ततश्छेदः कण्ठस्तु द्विगुणस्ततः ॥ २७ ॥

पट्टिका गिरिपत्री च विधातव्ये स्तरं स्तरम् ।
उभौ (स्तरौ)खिरिहिरं भवेच्छेदः स्तरं ततः ॥ २८ ॥

तथैव कण्ठस्तद्वच्च पट्टिकागिरिपत्रिके ।
वरण्डिका द्विस्तरा स्याच्छेषं पूर्ववदाचरेत् ॥ २९ ॥

उभौ स्तरौ खिरिहिरं छेदं कुर्वीत भागिकम् ।
कण्ठश्च पत्रिका चैव गिरिपत्री च पूर्ववत् ॥ ३० ॥

द्विस्तरा वेदिका कार्या (ध्यंवपादिकया?)[1] युता ।
छेदमेकं स्तरं कुर्यात् कण्ठं (तद्)द्विगुणं ततः ॥ ३१ ॥

पत्रिकां गिरिपत्रीं च तस्यैवार्धेन कारयेत् ।
स्तराष्टकेन घण्टा स्याद् यदिवामलसारकम् ॥ ३२ ॥

भवेत्पद्मं(?) + + + + कलशो द्विगुणस्ततः ।
स्तरमेकं भवेद् ग्रीवा कर्णं कुर्वीत तत्समम् ॥ ३३ ॥

---

१. 'द्व्यर्धपादिकया' इति स्यात् ।

द्विगुणं बीजपूरं तु पूर्वत्राप्येवमाचरेत् ।
(त्कृष्टा सप्तदशांशकैर्भागैस्त्रिभिर्भवेत्?) ॥ ३४ ॥

द्विभागिकः प्रतिरथः शाला स्यात् पञ्चभागिका ।
शालाप्रत्यङ्गयोरन्तर्भागार्धेनोदकान्तरम् ॥ ३५ ॥

परस्परं विनिष्कासः पादहीनं पदं भवेत् ।
गर्भः स्याद् दशभिर्भागैर्भित्तिः सार्धपदत्रयात् ॥ ३६ ॥

चतुर्भिर्वेदिकाबन्धो जङ्घा स्यादष्टभिः पदैः ।
सार्धैः पञ्चभिराद्या भूः कपोतालीसमन्विता ॥ ३७ ॥

(तृ?द्वि)तीया भूमिका चास्य कर्तव्या पञ्चभिः पदैः ।
सार्धैर्भवेत् तृतीयापि चतुर्भिर्भूमिका पदैः ॥ ३८ ॥

चतुर्थी भूमिका भागैश्चतुर्भिः कीर्तिता पदैः ।
घण्टा च त्रिपदा कार्या कूटभक्त्यादि पूर्ववत् ॥ ३९ ॥

शुकनासादि कुम्भादि पूर्ववत् समुदाहृतम् ।
उक्तोऽयं वर्धमानाख्यः प्रासादः शुभलक्षणः ॥ ४० ॥

नन्द्यावर्तमथ ब्रूमः क्षेत्रे सप्तदशांशके ।
कोणांश्चतुष्पदान् कुर्यात् पञ्जरं सार्धभागिकम् ॥ ४१ ॥

षड्(भि)र्भागैर्भवेच्छाला गर्भस्तु दशभागिकः ।
सार्धत्रिभागिका भित्तिरूर्ध्वमान(द्विभांगुणम् ?) ॥ ४२ ॥

वेदी चतुष्पदोत्सेधा जङ्घा भागाष्टकोच्छ्रिता ।
षट्पदा भूमिका + + + + पञ्चपदायता ॥ ४३ ॥

स्यात् सम्पदे चतुर्भागा तृतीयान्या पदोच्छ्रिता ।
(सांद्विवांसिवघटा?) स्यात् पूर्ववत् कलशादिकाः ॥ ४४ ॥

नन्द्यावर्तोऽयमाख्यातः प्रासादः सर्वकामदः ।
अथातः सम्प्रवक्ष्यामः प्रासादं नन्दिवर्धनम् ॥ ४५ ॥

चतुरश्रीकृते क्षेत्रे पदाष्टादशकाङ्किते ।
कोणस्त्रिपदविस्तारः प्रत्यङ्गं स्यात् पदद्वयम् ॥ ४६ ॥

शाला चतुष्पदा प्रोक्ता चित्रकर्मोपशोभिता ।
पादोनभागमानेन निर्गमः स्यात् परस्परम् ॥ ४७ ॥

कोणप्रत्यङ्गयोर्मध्ये शालाप्रत्यङ्गयोस्तथा ।
भागेन विस्तृतं कार्यं सर्वत्र सलिलान्तरम् ॥ ४८ ॥

गर्भः स्याद् दशभिर्भागैर्भित्तिर्भागचतुष्टयात् ।
ऊर्ध्वमानमथ ब्रूमो द्विगुणं तत् प्रकीर्तितम् ॥ ४९ ॥

वेदीबन्धोंऽशकाः पञ्च जङ्घा स्यादष्टभागिका ।
प्रथमा भूमिका कार्या कपोतालीसमन्विता ॥ ५० ॥

सपादैः पञ्चभिर्भागैर्द्वितीया तद्वदेव हि ।
तृतीया तु भवत्यस्य भूमिका पञ्चभागिका ॥ ५१ ॥

चतुर्थी भूमिका ज्ञेया सार्धभागचतुष्टया ।
घण्टा तस्योर्ध्वतः कार्या पदत्रयसमुच्छ्रिता ॥ ५२ ॥

शुकाघ्रा (घ्र?शू)रसेनश्च स्तम्भिकाकूटभक्तयः ।
कलशस्योदयस्तस्य विधेयाश्चास्य पूर्ववत् ॥ ५३ ॥

अमुं यः कारयेदन्यः प्रासादं नन्दिवर्धनम् ।
स नन्दिगणसामान्यो जायते नात्र संशयः ॥ ५४ ॥

अतः परमथ ब्रूमो विमानं शुभलक्षणम् ।
चतुरश्रीकृते क्षेत्रे विंशत्या भाजिते पदैः ॥ ५५ ॥

को(णाः) पञ्चपदाः कार्या मध्ये च सलिलान्तरम् ।
कर्णिका सार्धभागेन भागार्धमुदकान्तरम् ॥ ५६ ॥

(सालोपद्यद?)विस्तीर्णा सार्धभागेन निर्गता ।
कोणस्य चार्धभागेन कर्णिकानिर्गमः स्मृतः ॥ ५७ ॥

गर्भश्चास्य विधातव्यो द्वादशांशकविस्तृतः ।
भित्तिश्चतुष्पदा कार्या दिक्षु सर्वास्ववस्थिता ॥ ५८ ॥

ऊर्ध्वमानमथैतस्य ब्रूमस्तद् द्विगुणं भवेत् ।
वेदीबन्धोंऽशकाः पञ्च जङ्घा नवपदोच्छ्रिता ॥ ५९ ॥

---

१. 'शाला षट्पद' इति स्यात्।

प्रथमा भूमिका कार्या भागैः षड्भिः समुच्छ्रिता ।
शतपत्रां कपोतालीं मध्ये चास्याः प्रकल्पयेत् ॥ ६० ॥

द्वितीया भूमिका चास्य विधेया पञ्चभिः पदैः ।
अर्धेऽस्याः स्तम्भकोच्छालं कूटं चार्धव्यवस्थितम् ॥ ६१ ॥

([1]परस्परपार्धेन इमा?)स्तिस्रोऽन्यभूमिकाः ।
स्तम्भिकाकूटभरणशूरसेनाः सघण्टकाः ॥ ६२ ॥

कलशस्योदयश्चात्र प्राग्वत् कार्या विपश्चिता ।
य इमं कारयेद् भक्त्या विमानाख्यं नृपुङ्गवः ॥ ६३ ॥

इह भोगान् स लभते तथा (सत्कायदंविधे?) ।
अथ पद्माप्रियप्रीतिजननः पद्म उच्यते ॥ ६४ ॥

चतुरश्रीकृते क्षेत्रे भक्ते षोडशभिः पदैः ।
कोणाश्चतुष्पदाः कार्याः सलिलान्तरभूषिताः ॥ ६५ ॥

द्विपदः पञ्जरो ज्ञेयो गर्भे कोणाश्चतुष्पदाः ।
([2]भागःस्यात्?) षोडशांशेन तदन्ते सलिलान्तरम् ॥ ६६ ॥

गर्भः स्यान्नवभिर्भागैर्भित्तिः सार्धपदत्रयम् ।
ऊर्ध्वमानमथ ब्रूमस्त(था?द)स्य द्विगुणं भवेत् ॥ ६७ ॥

द्वितीया भूमिका ज्ञेया भागैः पञ्चभिरुच्छ्रिता ।
अन्योन्यं तु पदार्धेन हीनं स्याद् भूमिकाद्वयम् ॥ ६८ ॥

स्तम्भिकाकूटभरणशुका(ग्र?ग्रा)शूरसेनकाः ।
घण्टा([3]कारस?)विस्तारा भवन्त्येतस्य पूर्ववत् ॥ ६९ ॥

पद्मप्रासादमेनं यः कारयेद् भक्तिसंयुतः ।
स श्रीपतिरिव श्रीशो भवत्यवनिमण्डनः ॥ ७० ॥

महाभद्रमथ ब्रूमः प्रासादमतिसुन्दरम् ।
चतुरश्रीकृते क्षेत्रे विंशत्या सैकयाङ्किते ॥ ७१ ॥

कोणाश्चतुष्पदाः सार्धद्व्यंशाः प्रत्यङ्गकाः स्मृताः ।
शाला पञ्चपदा कार्या दिक्षु सर्वास्ववस्थिता ॥ ७२ ॥

---

१. 'परस्परं पदार्धेन हीना' इति स्यात् । २. 'भागस्य' इति स्यात् । ३. 'कलश' इति स्यात् ।

पादोनभागविस्तारं कर्तव्यं सलिलान्तरम् ।
गर्भस्त्रयोदशपदो भित्तयश्च चतुष्पदाः ॥ ७३ ॥

ऊर्ध्वमानमथैतस्य भ्रूमस्तद् द्विगुणं भवेत् ।
वेदी चतुष्पदोत्सेधा जङ्घा स्यादष्टभागिका ॥ ७४ ॥

सप्तभागसमुत्सेधा विधेया चादिभूमिका ।
मध्ये सान्तरपत्रास्याः कपोताली पदत्रयम् ॥ ७५ ॥

द्वितीयभूमिका चास्य सार्धैः षड्भिः पदैः स्मृता ।
भागभागविहीनास्तु तिस्रोऽन्या भूमिकास्ततः ॥ ७६ ॥

घण्टा भागत्रयोत्सेधा पद्मपत्रिकया सह ।
स्तम्भिकाकूटभरणशुकाग्राशूरसेनकाः ॥ ७७ ॥

कलशः (कुम्भं नघाः?) प्राग्वत् तस्य भवन्त्यमी ।
महाभद्रमिमं योऽत्र कारयेद् भक्तिमान् नरः ॥ ७८ ॥

स स्वर्गे सुरनारीभिः सेव्यते मदनाज्ञया ।
अथ श्रीवर्धमानस्य लक्ष्म साम्प्रतमुच्यते ॥ ७९ ॥

चतुरश्रीकृते क्षेत्रे चतुर्विंशतिभाजिते ।
कोणाः षड्भागिकाः कार्याः शालाः स्युर्नवभागिकाः ॥ ८० ।

सार्धं पदद्वयं कार्यः शालानामत्र निर्गमः ।
कुर्याज्जलान्तरं तत्र मध्यतः कोणशालयोः ॥ ८१ ॥

विस्तृतं सार्धभागेन प्रविष्टमपि भागतः ।
(कोणे मध्यं?)[1] विधातव्यं भागेनैवोदकान्तरम् ॥ ८२ ॥

नवांश(कुः?क्ल)प्तशालायाः प्रत्यङ्गौ द्वावुदाहृतौ ।
भागद्वितयविस्तारौ भागेनैकेन निर्गतौ ॥ ८३ ॥

चतुर्दशपदो गर्भो भित्तिः पञ्चपदा स्मृता ।
ऊर्ध्वमानमथ भ्रूमस्तदस्य द्विगुणं भवेत् ॥ ८४ ॥

वेदिका षट्पदोत्सेधा जङ्घैकादशभिः पदैः ।
प्रथमा भूमिका चास्य कार्या सप्तांशकोच्छ्रिता ॥ ८५ ॥

पादोनैः सप्तभिर्भागैर्द्वितीया भूमिकेष्यते ।
तृतीया भूमिका षड्भिः सपादैर्जायते पदैः ॥ ८६ ॥

---

१. 'कोणमध्ये' इति स्यात् ।

(पादेन षट्का[1])भागेन चतुर्थी भूमिका स्मृता ।
भागं भागं विधातव्यः प्रवेशः प्रतिभूमिकम् ॥ ८७ ॥
सपादैः पञ्चभिर्भागैः कार्यो घण्टासमुच्छ्रयः ।
भागत्रयसमुत्सेधस्तदूर्ध्वे कलशो भवेत्[2] ॥ ८८ ॥

+++++++++++++पदाः स्मृताः ।
भागद्वितयविस्ताराः कर्तव्या बालपञ्जराः ॥

शाला षड्भागविस्तीर्णा भागात्रि(तयमुच्छ्रिता) ।
(को)णप्रत्यङ्गयोर्मध्ये शालाप्रत्यङ्गयोस्तथा ॥

कक्षान्तरे विधातव्यं भागिकं सलिलान्तरम् ।
गर्भः स्याद् दशभिर्भागैर्भित्तिः कार्यास्य षट्पदा ॥

षट्पदा स्यात् तृतीयात्र ++ भागोच्छ्रिताः पराः ।
कर्ण ++++ स्तिस्रो घण्टा चाष्टपदोच्छ्रिता ॥

कूटैरलङ्कृता कार्या शुकाग्रादि च पूर्ववत् ।
स +++ पि चैतेषां प्रासादार्धेन कारयेत् ॥

घण्टां तु संहतां श्लक्ष्णां बन्धनैरुपशोभिताम् ।
यादृशी क्रम ++ ने कूटेष्वेषां विधीयते ॥

भद्रेषु तादृशी कार्या कृत्स्नप्रासादसिद्धये ।
य इमं कारयेद् राजा प्रासादं पृथिवीजयम् ॥

भुनक्ति निखिलां पृथ्वीं स सप्ताम्भोधिमालिनीम् ।
इतीरिता द्वादश (स्यगर्ते?)
प्रासादमुख्याः शुभलक्ष्मयुक्ताः ।
वावाटसंज्ञास्तदमून् विदित्वा
(लभेत् पूज्यस्थयते नृ[3])पेभ्यः ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे

(वटोक?)प्रासादो नाम चतुःषष्टितमोऽध्यायः ॥

———:०:———

१. 'पादोनषट्क' इति स्यात् । २. इत ऊर्ध्वं मातृकायां पत्रमेकं (२३३तमं) लुप्तम् । ३. 'लभेत पूजां स्थपतिर्नृ' इति स्यात् ।

# अथ भूमिजप्रासादलक्षणं नाम पञ्चषष्टितमोऽध्यायः ।

—— :o: ——

भूमिजानां विमानानां ब्रूमो लक्ष्म क्रमागतम् ।
चतुरश्रीकृतानां च वृत्तानां (वृत्तं[1] पूर्वशः ?) ॥ १ ॥

केषाञ्चिन्निर्गमस्तत्र जायते भागसंख्यया ।
केषञ्चित् पुनरेष स्याद् वृत्तमध्यमधिष्ठितः ॥ २ ॥

चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ।
चतुर्भूमियुतस्याथ लक्ष्म (त्संशस्य?च्छन्दस्य) कथ्यते ॥ ३ ॥

चत्वारश्चतुरश्राः स्युर्निषधो मलयाचलः ।
माल्यवान् नवमाली च निषधस्तेषु कथ्यते ॥ ४ ॥

(कोणा शंभोतरो द्व्यंशं भार्दशंभोर्धभागिकः?) ।
विस्तारायामतः प्रोक्तो भद्रं पञ्चांशविस्तृतम् ॥ ५ ॥

कार्या(ः) पादोनभागेन भद्रस्यैतस्य निर्गमाः ।
कार्या पल्ल(म्बि?वि)का तस्य पादभागेन विस्तृता ॥ ६ ॥

भागेन कर्णिका कार्या विस्तृत्या निर्गमेण च ।
प्रतिभद्रं च भागार्धनिर्गतं तत्र कल्पयेत् ॥ ७ ॥

पादोनभागद्वितयं प्रतिभद्रस्य विस्तृतिः ।
षड्भिर्भागैर्भवेद् गर्भो भित्तिरस्य द्विभागिका ॥ ८ ॥

तलच्छन्दस्य लक्ष्मोक्तमूर्ध्वमानमथोच्यते ।
विस्तृतेर्द्विगुणं तच्च चतुर्भागाधिकं भवेत् ॥ ९ ॥

वेदीबन्धो भवेदस्य सार्धभागद्वयोच्छ्रितः ।
तत्तु भागद्वयं सार्धं विभजेदर्धपञ्चमैः ॥ १० ॥

भागद्वयेन कुम्भः स्यात् कलशो भागिकः स्मृतः ।
भागार्धेनान्तरं पत्रं कपोताली तु भागिकी ॥ ११ ॥

---

१. 'अनुपूर्वशः' इति स्यात् ।

(उ)क्तोऽयं वेदिकाबन्धो भागैरित्यर्धपञ्चमैः ।
अर्धपञ्चमभागैः स्याज्जङ्घोच्छालकसंयुता ॥ १२ ॥

त्रिभि + + + ने + + भूत्सेधः सवरण्डिकः ।
द्वितीयास्य भवेद् भूमिरर्धपञ्चमभागिका ॥ १३ ॥

कुम्भः सोच्छालका + + + + + यापि तावता ।
तृतीया स्या(द्) भूर्विधेया(स्यासादा?) चतुरङ्गिका ॥ १४ ॥

चतुर्थी चतुरो (भागाद्यः समु + + + + + + ?) ।
(कु)म्भः सोच्छालकः कूटस्योच्छ्रायोऽपिच पूर्ववत् ॥ १५ ॥

वेदी स्यात् सांशका सार्धपञ्चांशा स्कन्धविस्तृतिः ।
(+ + + + + खेत्सार्ध?) चतुर्गुणितविस्तरात् ॥ १६ ॥

तले या कथिता शाला भागपञ्चकविस्तृता ।
स्कन्धस्थानं + + + + भागद्वितयविस्तृता(ः) ॥ १७ ॥

रेखावशेन कर्तव्याः प्रवेशाश्च क(माचु?भाद् शु)बाम् ।
मूलतः स्कन्धपर्यन्तं घण्टायाः पु + + + याः ॥ १८ ॥

भवेत् प्रासादविस्तारः (पञ्चमणैव?) सुन्दरः ।
(वेदकोऽर्धेतरं?) यत् स्याच्छालायास्तत्प्रमाणतः ॥ १९ ॥

+ + ये विस्तरः प्रोक्तस्तं + षड्भिर्विभाजयेत् ।
भागेनैकेन कण्ठस्य प्रवेशः परितो भवेत् ॥ २० ॥

कण्ठवृत्तं चतुर्भागविस्तृतं परिकल्पयेत् ।
घण्टोत्सेधं त्रिभिर्भागैर्विभजेत् तत्र भागिका(त्) ॥ २१ ॥

घण्टोत्सेधादतः कार्यं प(द्मं?द्म)शीर्षं विपश्चिता ।
उत्सेधात् कलशो द्व्यंशः सार्धभागेन विस्तृतः ॥ २२ ॥

शिखरात् त्र्यंशहीना स्यात् सर्वत्र (द्युताशिका [1]?) ।
इति त्र्यंशश्चतुर्भूमिः प्रासादो निषधो मतः ॥ २३ ॥

सर्वासामेव कर्तव्यो देवतानां विभू(षयेत्?तये) ।

निषधप्रासादः ॥

मलयाद्रेरिदानीं तु लक्षणं सम्प्रचक्ष्महे ॥ २४ ॥

---

१. 'शुकनासिका' इति स्यात् ।

शाला प्रदीयते सा स्यान्नन्द्यावर्त(यत्यहर्पतेः?) ।[1]
विकर्णकन्दधोराग्रे(?) यदास्याः पृष्ठवंशगा ॥ ६० ॥

द्विभागायामविस्तारा शाला भवति शोभना ।
चतुर्ष्वसंस्थिता(?) शाला शालायाः संमुखी भवेत् ॥ ६१ ॥

तांम्रमूला[2] तदा ज्ञेया ब्रह्मविष्णुह(रि?र)प्रिया ।
यदास्याः पृष्ठवंशस्था (हस्तायाम्योत्तरात्तथा ॥ ६२ ॥

शाले क्रियेते?) तदा ज्ञेया पारिजातकमञ्जरी ।
(वारणीचतुष्टःस्थिता?) शालायाः सम्मुखी भवेत् ॥ ६३ ॥

(ताम्रयाम्यासौम्यासु?) शालाः स्युर्यदि वंशगाः ।
प्रिया स्यात् सर्वदेवानां तदा चूडा(मणिः[3] प्रभोः?) ॥ ६४ ॥

चतुरश्रीकृते क्षेत्रे चतुरश्रः[4] समन्ततः ।
दशांशः (स्यादुभायान्ता?) मध्ये प्रासादनायकः ॥ ६५ ॥

+ + + पुरतश्चैवं पार्श्वयोरुभयोरपि ।
भ्रमास्तस्या विधातव्याः + + + पञ्चभिः पदैः ॥ ६६ ॥

कर्णकन्दाश्च कर्तव्या भ्रमसूत्राद् वहिः स्थिताः ।
द्विभागायामविस्ताराश्चतुःशालोपशोभिताः ॥ ६७ ॥

अमुनैव क्रमेण स्युर्भद्रकन्दाः पदाधिकाः ।
मूलप्रासादमालायां मालात्रितयधारिणाम्(?) ॥ ६८ ॥

कर्णे कर्णे तु याः शालास्ता द्व्यंशायामविस्तृताः ।
द्विभागिकजलाधारा(स्तथा) भागपरिभ्रमाः ॥ ६९ ॥

पदम(वि)ष्टाम्बुपदा भ्रमपद्धतिसंयुताः ।
तुल्याश्चतुर्षु कर्णेषु तुल्या भद्रत्रयेऽपिच ॥ ७० ॥

भागद्वितयविस्तीर्णा भागत्रितयमायताः ।
(सृग?)भ्रमाश्च कर्तव्या भ्रमशालादिशान्तयोः ॥ ७१ ॥

---

१. 'र्ता त्वहर्पतेः' इति स्यात् । २. 'भूपाले'ति लक्ष्यनिर्देशे पठ्यते । ३. 'मणिप्रभा' इति पाठ्यं भाति । ४. इह क्षेत्रविभाजकांशादर्शनात् किञ्चिल्लुप्तमिव प्रतिभाति ।

शेषं च पूर्ववत् कार्यं शुण्डिकागण्डमण्डनम् ।
स्यात् कर्णमञ्जरीत्येषा त्रिलोक्यानन्ददायिनी ॥ ७२ ॥

कर्णमञ्जरिकाभद्रे विभक्ते दशभिः पदैः ।
द्विभागायामविस्तारां तुर्यां शालां निवेशयेत् ॥ ७३ ॥

उद (क) क्षणपूर्वाणि मुखान्यासां प्रकल्पयेत् ।
परिक्रम(स्त्रिःस्तु) सर्वासां भागैकः सर्वतो भवेत् ॥ ७४ ॥

द्वौ भागौ भद्रकर्णाभ्यां संक्षेपो(भ्याभयपार्श्वयोः?) ।
भागिकोभयविस्तारा भद्रेऽन्या कर्णिका भवेत् ॥ ७५ ॥

पदैः षोडशभिर्यु(क्तः?क्ता)विचित्रभ्रमविभ्र(मं?मा) ।
भद्रास्या (च) चतुष्की स्यात् पुरतः संवृतान्त(रः?रा)) ॥ ७६ ॥

श्रीमण्डपं प्रकुर्वीत प्रभूतस्तम्भमण्डितम् ।
(दितामेतानेन परिक्षिप्तं छाद्यकाले हसंयुत?) ॥ ७७ ॥

(एश्वास्याद् विश्वरूपे च कस्यायास्तुदपुरस्करा?) ।
चतुष्किका(भि)स्तिसृभिर्भवेत् त्रैलोक्यसुन्दरी ॥ ७८ ॥

चतुरश्रीकृते क्षेत्रे भक्ते द्वादशभिः पदैः ।
त्रिभागायामविस्तारा मध्ये शाला चतुर्मुखी ॥ ७९ ॥

सर्वतः सार्धभागा(श्व?च) कर्तव्या पदपद्धतिः ।
तस्याः प्रागुदक ++++ शालाचतुष्टयम् ॥ ८० ॥

द्विभागायामविस्तारं विधातव्यं सुशोभनम् ।
भागिकालिन्दकेनैतत् स्यात् प्राक्से+न वेष्टितम् ॥ ८१ ॥

कक्ष्यास्थाभिर्द्विभागाभिः कर्णिकाभिरलङ्कृतम् ।
एवैत् कर्णमञ्जर्याः कर्णे ++ विधीयते(?) ॥ ८२ ॥

जगती स्याच्छिवस्येष्टा तदा गन्धर्व(मा?बा)लिका ।
इय(वे?मे)वापरे भागे चतुर्थ्या शालयान्वि(तं?ता) ॥ ८३ ॥

विज्ञेया जगती नाम्ना विद्याधरकुमारिका ।
अपरस्यां चतु(र्थी?र्थी) तु हित्वा शालां (विनीयते?) ॥ ८४ ॥

ते द्वे + (कुद्यो?) कुर्वीत सुभद्रां त्रिदशप्रियाम् ।
(चतस्रषु भद्रेषु प्रत्येकं पञ्च कर्णिगा ॥ ८५ ॥

शालाः स्युर्यदिश्चन्द्राष्टा?) तदा स्यात् सिंहपञ्जरा ।
चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते ॥ ८६ ॥

त्रिभागायामविस्तीर्णं मध्ये देवकुलं भवेत् ।
भागेनैकेन कर्तव्यो भ्रमो दिक्षु तिसृष्वथ ॥ ८७ ॥

प्रासादायामविस्तीर्णे तस्याग्रे मुखमण्डपः ।
भद्रस्य पार्श्वद्वितये बाह्यतो भद्रविस्तृत(म्) ॥ ८८ ॥

शालायुग्मं विधातव्यं त्रिपदायामविस्तृति ।
भागिक(भद्रमा?भ्रम)णोपेतं (यदिकाच पयास्वित?) ॥ ८९ ॥

द्विभागायामविस्तारे भागिकभ्रमणान्विते ।
शाले द्वे पुरतः कार्ये साम्मुख्याच्च परस्परम् ॥ ९० ॥

(पञ्चस्वलं?) भवेदेवं पृष्ठभद्रं यदा शुभम् ।
याम्योत्तरे चतुःशाले (भद्रद्वयपञ्चकञ्जरा?) ॥ ९१ ॥

पृष्ठभद्रं यदैतस्या +++न्मध्यशालया ।
(कक्षाभद्रे तया स्यायुते?) गन्धर्वनगरी तदा ॥ ९२ ॥

पञ्च त्रीण्येव भद्राणि पञ्चशालान्वितानि च ।
(शिशुतत्?) षट्त्रिंशत्तमा ज्ञेया सा जगत्यमरावती ॥ ९३ ॥

शुण्डिकाग्रे यदैतस्याः शाला सम्पद्यते क्वचित् ।
तदा स्याद् दन्तचूडेति जगती जगतः प्रिया ॥ ९४ ॥

(इयनि?) शुण्डिकाशाला गण्डशालाद्वयान्विता ।
त्रिदशेन्द्रसभा ज्ञेया ससुण्डी देवयन्त्रिका ॥ ९५ ॥

(इति चतुरस्त्राणां कीर्त्यतेषायताः कासानकामा?) ।
सप्तभागायते क्षेत्रे भागपञ्चकविस्तृते ॥ ९६ ॥

द्विभागायतविस्तारे स्तः शाले वामदक्षिणे ।
चतुष्किकैकभागेन तयोरेवाग्रतो भवेत् ॥ ९७ ॥

---

१. 'रत्नधूमा' इति पूर्वं पठितम् ।

भ्रमश्च भागिको मध्ये समन्ताच्च विधीयते ।
प्रतोल्या भूषिता खण्डशुण्डिकाभिरलङ्कृता ॥ ९८ ॥

मत्तवारणशोभाढ्या (यमालेखा[1]?) प्रकीर्तिता ।
यदा स्यात् पृष्ठतः कन्दो भागत्रितयविस्तृतः ॥ ९९ ॥

भागत्रितयनिष्क्रामश्चतुर्धा भाजितः पुनः ।
द्विभागायामविस्तारा शाला भागद्वयं भ्रमः ॥ १०० ॥

तदा पयोधरा नेत्रा शालाभ्यामग्रपृष्ठयोः ।
(नेत्राद्याश्चेत्यरशालास्यातां तु काया ॥ १०१ ॥

पौरस्त्ययोरुभयोः साम्नमूत्कन्दो भागनिर्गतः?) ।
भागमन्तः प्रविष्टश्च विभाज्यः सोऽपि पूर्ववत् ॥ १०२ ॥

(शालयोः स्यांतमोमानभ्रमयोरपि पूर्ववत् ।
पार्श्वयोर्भ्रामण्यं चागौ द्वे च चेन्मूलशालायाः ॥ १०३ ॥

शेषं तु पूर्ववत् सर्वदोर्दण्डा प्रासादाः प्रकीर्तिताः?) ।
दोर्द(ण्डयो?ण्डाया)स्तु पार्श्वेऽपि शालासुश्लिष्टकर्णयोः ॥ १०४ ॥

राक्षसानिलयोः शाले कुर्यादाखण्डला भवेत् ।
आखण्डालायास्तु यदा पश्चाच्छाला विधीयते ॥ १०५ ॥

(पयो यं सरयोनि इव वच्छिदेति?) जगती भवेत् ।
(शिवायं वारुणी यद्वा शालात्रयविभूषिता ॥ १०६ ॥

शुण्डिकारालय मचेन्माहेन्द्री वंपका तदा ।
कोकैणेषु यमेलायासाद्यदा शालाचतुष्टय ॥ १०७ ॥

भद्रत्रयोऽपि तिस्रस्ताः पूर्वभद्रममालकम् ।
ये कर्ण व + कन्दाः स्युः सार्धत्र्यंशविनिर्गतः?) ॥ १०८ ॥

चतुर्भिस्तेषु भक्तेषु शाला भागद्वयं भवेत् ।
भागं भागं भ्रमण्यः स्युः कर्णशाला इमा बहिः ॥ १०९ ॥

(त्रिनिष्क्रान्ता सुविस्तीर्णा भद्रकन्दास्थिते बहिः ।
चतुर्भिस्त्र्येपुतैः शाला स्युरार्धो भ्रमस्तथा ॥ ११० ॥

---

१. 'यमलैषा' इति स्यात् ।

पदार्धसंमितः कुष्टौ जलमार्गो विधीयते ।
पृष्ठसार्धोसिकास्तस्या द्वै कुलामोदिकाष्टमा ॥ १११ ॥

भागार्धयलमाला + + + द्वितयशालिना ।
पृष्ठभद्रेण जगतीतिलकाले केचिस्तुता?) ॥ ११२ ॥

एतस्यां शुण्डिकायां स्याच्छाला चेन्मुखभूषणम् ।
असौ + पल्लवा ना(व?म) जगती जायते तदा ॥ ११३ ॥

तिलका गण्डकण्डेषु(?) शा(ला?ले) द्वे भ(व)तो यदा ।
(तेदा सिद्धार्थसंमुखां?) तदा विद्याधरी भवेत् ॥ ११४ ॥

त्रिविस्तृतं द्विनिष्क्रान्तं पृष्ठशालातलं यदि ।
विद्याधर्याः पृष्ठभद्रे तदा यक्षं विनिर्दिशेत् ॥ ११५ ॥

षड्भागविस्तृते क्षेत्रे दशभागकृतायते ।
द्विभागायामविस्तारं कुर्याच्छालात्रयं बुधः ॥ ११६ ॥

तदग्रे तत्समं कुर्यान्मण्ड(पा अधिवाधिकात्?) ।
यथाकामं प्रकुर्वीत कर्मशोभाविभूतये ॥ ११७ ॥

+ + भागं भ्रमं कुर्यात् तासां पार्श्वचतुष्टये ।
(विशेषकरणायंच शालानां मध्यमैरपि?) ॥ ११८ ॥

मत्तवारणसंयुक्ताः सुण्डिकागण्डमण्डिताः ।
इयं त्रिकूटा जगती ख्याता (तृपुषपूर्या?) ॥ ११९ ॥

त्रिकूटा पूर्ववंशस्था त्रिभागायामविस्तृता ।
(विदध्यात् सवमां शालां प्राग्वत् स्याचित्रकूटिका?) ॥ १२० ॥

यथा पृष्ठे तथाग्रेऽपि यदि शाला विधीयते ।
तदा सरनिकूटीति विज्ञेया जगती बुधैः ॥ १२१ ॥

(युक्ता प्राणास्य लाभ्यामग्रशालाविवर्जिता) ।
उपमेवाजोत्तमा?) सा जगती विश्रुता भुवि ॥ १२२ ॥

नैर्ऋतानलवाय्वीशकर्णप्रासादकैर्युता ।
(त्रिकूटैर्भवेन्नन्दै विभक्तषडला यथा ॥ १२३ ॥

चित्रकूटा क्रमानर्यां द्विभजनं पूर्वविकूटवद् विचक्षणः ।
त्रिकूटायामतो रूपे सिद्धिद्व्यायामविस्तृतम्?) ॥ १२४ ॥

कर्णे कर्णे कृतं कन्दं चतुर्धा प्रविभाजयेत् ।
भागद्वयेन शाला स्याद् भागेन भ्रमणं तथा ॥ १२५ ॥

(मूलतार्धविस्तारं भवतश्चेह मानतः ।
याम्योत्तरे चतुर्भागविस्तार भागं निर्गताम् ॥ १२६ ॥

+++++++ भद्रं भागिकद्वयान्वितम्?) ।
शेषं तु भ्रमणं तत्र मध्यपार्श्वेषु कारयेत् ॥ १२७ ॥

एवमग्रेऽपि शाले द्वे द्वारस्योभयपार्श्वयोः ।
कर्तव्ये भागनिष्क्रान्ते भागिकायामविस्तृती ॥ १२८ ॥

पृष्ठभद्रं च कर्तव्यं सार्धांशद्वयविस्तृतम् ।
द्विभागनिर्गमं युक्तं शालया सार्धभागया ॥ १२९ ॥

याम्योत्तरेण चास्यैव कार्यं शालाद्वयं ततः ।
(प्रमाणे पसन्नकार्ये भागे प्रवेशनम्?) ॥ १३० ॥

शेषो भ्रमः स्याच्छालानां सप्तानां मध्यगस्ततः ।
स्याच्छैवी (श्रयणी?) त्वेषा सर्वामरगणप्रिया ॥ १३१ ॥

अस्या एव मुखे शाला यदा संजायते तदा ।
त्रिविक्रमेति विख्याता जगती जायते शुभा ॥ १३२ ॥

यदा सार्धविनिष्क्रान्ते सार्धांशद्वयविस्तृते ।
पार्श्वभद्रद्वये शाले भवेतां भागविस्तृते ॥ १३३ ॥

++++++ सार्धभागि(कं?क)भ्रमणान्विते ।
(लिप्यते चापि मा शाला?) क्रमायाता तदा भवेत् ॥ १३४ ॥

शालायाः शुण्डिकाग्रे तु त्रिपथा सैव जायते ।
(चतुर्यातो प्रोक्ता?)[1] कथ्यन्ते वृत्तजातयः ॥ १३५ ॥

चतुरश्रीकृते क्षेत्रे चतुर्भागविभाजिते ।
मध्ये देवगृहं वृत्तं सार्धांशायामविस्तृति ॥ १३६ ॥

---

1. 'चतुरश्रायताः प्रोक्ताः' इति स्यात् ।

भ्रमयेज्जगतीवृत्तं (समगां?) भागिकं ततः ।
पूर्वोक्तविधिना कार्यं पार्श्वतो मत्तवारणम् ॥ १३७ ॥

गोपुरद्वारशोभाढ्या जगती वलया भवेत् ।
वलयापृष्ठतः कन्दं मूलशालासमायतम् ॥ १३८ ॥

पूर्वोक्तविधिना भक्तां शालां कुर्यात् तदर्धतः ।
कलशेयं समाख्याता जगती कलशाकृतिः ॥ १३९ ॥

कर्णस्थं द्विपदायामं कर्णशालाचतुष्टयम् ।
चतुरश्रं भवेद् यत्र (शातार्म्यै +?)भिधीयते ॥ १४० ॥

सप्तभागायते क्षेत्रे चतुरश्रे समन्ततः ।
भागांस्त्रीन् वर्जयेदग्रे चतुरः(पृव्यन्तरश्चतान्?) ॥ १४१ ॥

सार्धांस्त्रीन् पार्श्वयोर्भागांस्त्यक्त्वा (गर्भततोकयेत् ?) ।
द्विभागायामविस्तारं वृत्तं स्याद् देवमन्दिरम् ॥ १४२ ॥

भागमेकं भ्रमस्तस्य विधातव्यः समन्ततः ।
भ्रमण्याः पृष्ठतः कन्दो भागायामविभूषितः ॥ १४३ ॥

तस्यार्धेन भवेच्छाला तदर्धेन परिक्रमः ।
गर्भाद् भागद्वयस्यान्त ईशानानलयोर्दिशोः ॥ १४४ ॥

द्विभागौ भवतः कन्दावर्धभागप्रवेशितौ ।
पृष्ठशालोर्ध्वगे तिर्यक्सूत्रे(ण?) दत्ते भ्रमान्तिके ॥ १४५ ॥

कर्णिकाद्वितयं कार्यं राक्षसानिलयोर्दिशोः ।
(व्यय?)शालां च कुर्वीत पृष्ठशालासमां ततः ॥ १४६ ॥

प्राक् (च?) पश्चात् कन्दगर्भ(स्था?स्थ)सूत्रद्वितययोगतः ।
कुर्वीत कर्णि(का?कां) ती(क्ष्णा?क्ष्णां)पार्श्वयोरुभयोरपि ॥ १४७ ॥

(शेषा भ?) पूर्ववत् सर्वा शुण्डिकादिक्रिया भवेत् ।
(यदागभी?) करवीरेयमीशादित्रिदशप्रिया ॥ १४८ ॥

एतस्या एव पृष्ठस्था यदा सन्त्य(ष?ष्ट) कर्णि(को?काः) ।
वामशाले विधीयेते नालिनीति तदा भवेत् ॥ १४९ ॥

१. 'सा कर्णेत्य' इति स्यात् । २. 'पृष्ठतश्च तान्' इति स्यात् । ३. 'गर्भे ततोऽङ्कयेत्' इति स्यात् ।

(दत्तंशस्य सालिख्यात् तद्यो दशभिः पदैः ?) ।
सूत्राणि पातयेत् तस्य ततो दिक्षु विदिक्षु च ॥ १५० ॥

प्रासादभ्रमणस्यान्ते द्विपदायाम(व?वि)स्तृती(न्) ।
कुर्वीताष्टसु सम्पातेष्वष्टौ कन्दान् समन्ततः ॥ १५१ ॥

(विधाय तां चतुर्भक्तां कुर्याद् भ्रामांस्तथा?) ।
अन्तरेण च कन्दानां कर्तव्यं कर्णिकाष्टकम् ॥ १५२ ॥

देशात् सार्धं यदा सूत्रे(?) यथा सम्पत्स्यते मिथः ।
पार्श्वद्वयात् कर्णिकानां संस्थानं स्यात् तथाविधम् ॥ १५३ ॥

भक्त्वैवं सर्वभद्राणि त्रिपदोऽन्तः सुरालयः ।
पार्श्वभ्रमो व्यर्धपादो(?) दशधा भाजिते भवेत् ॥ १५४ ॥

कन्दाश्च द्विपदाः कार्या बहिर्दिक्षु विदिक्षु च ।
अन्योन्याभिमुखास्तेषु शालाः कार्या यथोदिताः ॥ १५५ ॥

(शक्तियस्ता समीक्षते?) विष्णोरप्रतिमौजसः ।
कार्येयं तस्य (तान्येस्युः?) (पुण्डरीकविनामतः?) ॥ १५६ ॥

एतस्याः कर्णिकास्थाने यदा वृत्तं प्रकल्प्यते ।
तदानीमातपत्रं स्यात् कर्तव्या ब्रह्मणश्च सा ॥ १५७ ॥

कृत्वा वृत्तायतं क्षेत्रं विभजेद् दशभिः पदैः ।
तस्य मध्ये विधातव्यं देवागारं पदैस्त्रिभिः ॥ १५८ ॥

तस्य पार्श्वेषु कर्तव्यो भ्रमः सार्ध(द्वि)भागिकः ।
द्विभागं बाह्यवृत्तं स्यात् तत्र कुर्यादिमां क्रियाम् ॥ १५९ ॥

भागैर्द्वादशभिस्तच्च तुल्यमानैर्विभाजयेत् ।
एकैकं च पुनर्भागं चतुर्धा तेषु भाजयेत् ॥ १६० ॥

द्विभागायामविस्तारा शाला मध्ये विधीयते ।
भागिकश्चतुरश्रश्च दिछा(?)ला(नृ?त्रि)तये भ्रमः ॥ १६१ ॥

वामदक्षिणतः शाले (तां?) ये भवतः शुभे ।
ते वृत्ते संविधातव्ये संमुखे च परस्परम् ॥ १६२ ॥

---

१. 'विधाय तांश्चतुर्भक्तान् कुर्याद् दिक्षु भ्रमांस्तथा' इति स्यात् । २. 'केति नामतः' इति स्यात् । ३. 'तासां' इति स्यात् ।

(शाला तु खुमार्गस्याच्छालार्धभागार्धविस्तृतः?) ।
कल्प्यस्तेनैव मानेन (सच्चावा?) भ्रमणं भवेत् ॥ १६३ ॥

जगत्येषा समाख्याता चक्रवालेति नामतः ।
दिवाकराय कर्तव्या सग्रहायाथवेन्दवे ॥ १६४ ॥

(समक्षवायभद्रायामात्रिपुक्तायं वा पुन?) ।
चतुरश्रीकृते क्षेत्रे दशभागविभाजिते ॥ १६५ ॥

गर्भात् कोणगसूत्रेण सर्वतो वृत्तमालिखेत् ।
बहिस्त्रिपदविस्तारं कन्दं कुर्याच्चतुष्पदम् ॥ १६६ ॥

शा(लायां?लां) च द्विपदायामां विस्तारात् सार्धभागिकाम् ।
शेषं तु भद्रशालायाः समन्ताद् भ्रमणं भवेत् ॥ १६७ ॥

भद्रस्योभयतो वृत्ते द्विभागायतविस्तृते ।
शाले च वृत्तयोरन्तर्भागिकायामविस्तृती ॥ ॥ १६८ ॥

याम्यसौम्यापरास्वेवं दिक्षु भद्रत्रयं भवेत् ।
सार्धमायामविस्तारा(स्त?त्त)दर्धभ्रमणान्विताः ॥ १६९ ॥

शाला विदिक्षु कर्तव्याः शोभनाश्चतसृष्वपि ।
भद्रमध्ये स्थितां शालां हित्वा प्राच्या(तु सा) भवेत् ॥ १७० ॥

सार्धमायामविस्तारा(स्त?त्त)दर्धभ्रमणान्विता ।
सनक्षत्राय सोमाय कर्तव्या पुष्टिहेतवे ॥ १७१ ॥

चतुरश्रीकृते क्षेत्रे दशभागैर्विभाजिते ।
पञ्चभागायतां मध्ये शालां वृत्तां प्रकल्पयेत् ॥ १७२ ॥

सार्धभागद्वय(स्त?)मिता देवागारस्य बाह्यतः ।
(भ्रमण संविद्यातव्य[1]) कर्णशालाश्च कर्णगाः ॥ १७३ ॥

कर्णमानं बहिर्वृत्तं भ्रमयित्वा(सारन्द?समन्त)तः ।
भद्रोपभद्रकर्णेषु वृत्ताः शालाः प्रकल्पयेत् ॥ १७४ ॥

पदद्वयसमायामा(:) पदात्रितयविस्तृता(:) ।
भागि(का?क)भ्रमणोपेता(:) शालाः कुर्वीत भद्रजाः ॥ १७५ ॥

---

१. 'भ्रमणाः संविधातव्याः' इति स्यात् ।

द्वे भद्रात् पार्श्वयोः शाले द्वे च प्रतिरथाश्रये ।
भागिकायामविस्ता(रा?रे) कुर्यादर्धपरिभ्रमे ॥ १७६ ॥

(वौ?बा)हल्यायामतः सार्धभागा(ः?) शालार्धकर्णगा ।
तासां तदर्धमानेन विधातव्यः परिक्रमः ॥ १७७ ॥

प्रविष्टौ तु पदार्धेन भद्रान् प्रतिरथावुभौ ।
इत्येषा जगती प्रोक्ता मानतश्चन्द्रमण्डला ॥ १७८ ॥

अथ वृ१त्ता ++ ब्रूमो जगतीः षड् यथाक्रमम् ।
पञ्चभागायताः क्षेत्रा विस्तरेण चतुष्पदाः(?) ॥ १७९ ॥

विदध्यादायतं वृत्तं (चमस्यां भवभागिकः?) ।
मध्ये स्यात्(त्रि२पदास्तामा सद्विपदविस्तृताः?) ॥ १८० ॥

मत्तवारणसंयुक्ता (यः?प्र)तोल्यालङ्कृता शुभा ।
सोपानशुण्डिकाप्रान्तं ++ गण्डितमण्डिता(?) ॥ १८१ ॥

उक्तेयं मातुलिङ्गीति जगत्यमरवल्लभा ।
अस्या एव यदा पृष्ठे द्विभागायामविस्तृतिः ॥ १८२ ॥

शाला पूर्वक्रमेण स्यात तदा ज्ञेया घटीति सा ।
तद्रूपे (तद्यतालालं?) द्वे शाले वामदक्षिणे ॥ १८३ ॥

(यदि पश्चिमशाला च तत्रेस्यायमती जगती तदा?) ।
घटीकर्णेषु सर्वेषु द्विभागायामविस्तृ(ती?ताः) ॥ १८४ ॥

यदि स्युर्भ्रमसंयुक्ता(ः) शाला(ः) प्राग्वद् विभाजिता(ः) ।
(कुरुक्ष्येर्धायंतरिक्षे द्वे च पृष्ठे वार्तन्तदूर्य?) ॥ १८५ ॥

कालिङ्गीयं भवेदेवं (पार्श्वयो अंयुर्लमदात्रेपु?) ।
(पुस्यांसु?एतस्यां तु) यदा शाला शुण्डिकाननसं(त्रि?स्थि)ता ॥

वृत्तायतविनिर्माणा जगती स्या(द्दः?त्) ++++ ।
एता वृत्तायताः ॥

ब्रूमोऽथाष्टाश्रिसंस्था(न?ना) जगतीः शुभलक्षणाः ॥ १८७ ॥
चतुरश्रीकृतं क्षेत्रं सपादैर्दशभिर्भजेत् ।
परित्यजेत् ततः सूत्रं कर्णे कर्णे पदत्रयम् ॥ १८८ ॥

१. 'वृत्तायताः' इति स्यात् । २. 'त्रिपदायामा सार्धद्विपदविस्तृता' इति स्यात् ।

सपादांश्चतुरो भागान् मध्यभागेऽवशेषयेत् ।
संसिध्य(तेःति) च साष्टाश्रि तस्यार्धे स्यात् सुरालयः ॥ १८९ ॥

अष्टाश्रिमध्यभागस्थः + शेषं भ्रमणं भवेत् ।
प्रासादश्च (च)तुर्द्वारश्च(च?)तुर्भिर्मण्डपैर्यु(ताः?तः) ॥ १९० ॥

(प्रासादसाकसूत्र?) मुखलिङ्गं निवेशयेत् ।
मूलकन्दार्धतः (कन्दा[1] क्रमादिक्षु च?) ॥ १९१ ॥

तुल्यप्रमाणकानष्टौ चतुर्भागविभाजि(ताःतान) ।
भ्रमशालाश्च पूर्वोक्तक्रमेण परिकल्पयेत् ॥ १९२ ॥

सोपानशुण्डिकागण्ड(स्ताःगो)पुराद्यैरलङ्कृताः ।
(करन्यासामेरुपेता ववा सर्वायमुदाहृता?) ॥ १९३ ॥

कृत्वा पूर्ववदष्टाश्रि क्षेत्रं भद्रं (विःद्वि)धा भजेत् ।
कुर्याद् भागार्धकं भद्रे पक्षयोश्च विनिर्गतम् ॥ १९४ ॥

तद्विस्तारं भजेत् षड्भिर्निर्गमस्तैस्त्रिभिः पदैः ।
परिक्रमो भवेत् ++ पार्श्वयोः पृष्ठ(तोऽ)ग्रतः ॥ १९५ ॥

शेषं (शाला)युगं कार्यं भागद्वितयमायतम् ।
सार्धभागिकविस्तारं (संघचेस्यरस्यं च?) ॥ १९६ ॥

अनेनैव प्रकारेण भद्रे भद्रे भवेद् गतिः ।
कर्णभद्रं विधातव्यं त्रिपदायामविस्तृति ॥ १९७ ॥

चतुर्धा भाजिते तस्मिन् भागेन भ्रमणं भवेत् ।
शेषं तु शाला विज्ञेया द्विपदायामविस्तृता ॥१९८ ॥

विदिग(न्ते)षु सर्वेषु न्यासोऽयमतिसुन्दरः ।
मूलशाला तु कन्दार्धे (भ्रमश्चाधीभ्रमं ततः[2]) ॥ १९९ ॥

मातृकेयं समाख्याता (जगतुपसरचन्दितकिन्नरोशप्रदितिः?) ।
भद्रं ++ पदेभ्यः स्याद् (भद्र?भाग)त्रितयनिर्गतम् ॥ २०० ॥

---

१. 'कन्दान् क्रमाद् दिक्षु विदिक्षु च' इति स्यात् । २. 'भ्रमश्चार्धभ्रमस्ततः' इति स्यात् ।

चतुर्भागिकविस्तारं त्रिपदायामकन्दकम् ।
तदा स्याच्छेखरा नाम भद्रत्रितयभूषिता ॥ २०१ ॥

नित्यप्रमुदितानेकदेववृ(त्तद?न्द)कृतास्पदा ।
प्राग(ष्टच?ष्टा)श्रीकृते क्षेत्रे चतुर्भागविभाजिते ॥ २०२ ॥

द्विभागायामविस्तारे प्रासादे दशमे भ्रमे ।
अश्रिभिः समविस्तारा(दासष्टौ++?)[1] प्रकल्पयेत् ॥ २०३ ॥

सदा भागप्रविस्ता(रं?रान्) तांश्च कुर्यात् पृथक् पृथक् ।
निर्गमेण चतुर्भा(गो?गान्) भागिकभ्रमणान्वितान् ॥ २०४ ॥

द्विभागायामविस्तारं मध्ये शालाद्वयं भवेत् ।
पञ्चगर्भेयमित्युक्ता प्रजापतिमनःप्रिया ॥ २०५ ॥

भवे(ता?दा)र्यादिदेवीनां सदा चि(त्र?त्त)प्रसादिनी ।
विधाय(क्षेत्रमष्टास्रतवदर्धायामविस्तृतौ?)[2] ॥ २०६ ॥

मध्ये देवगृहं कार्यं तदर्धेन भ्रमो बहिः ।
भद्रं भवेद् द्वादशभिस्तैश्चतुर्भिर्विनिर्गमः ॥ २०७ ॥

तस्य(स्यात्य?) भद्राणां निर्गमोऽपि चतुष्पदः ।
विस्तारः षट्पदस्तेषां चतुर्भिस्तं विभाजयेत् ॥ २०८ ॥

भागार्धेन (च) शाला स्याद् भागत्रितय(स?)मा(यात्?यता) ।
भ्रमश्च स्या+(त्तु)कर्तव्यो भागं तत्पार्श्वयोः (रुद्राया?) ॥ २०९ ॥

द्विभागायामविस्ता(रा?रे) शाले स्यातां पदभ्रमे ।
इयमंशुमती प्रोक्ता जगती शुभलक्षणा ॥ २१० ॥

विधाय क्षेत्रमष्टाश्रि तदर्धायामविस्तृति ।
मध्ये देवगृहं कार्यं तदर्धेन भ्रमो बहिः ॥ २११ ॥

प्रासादसमविस्तारं भद्रं कृत्वा ततो भजेत् ।
चतुर्दशभिरस्य (स्यान्नितिर्यमो?)[3] दशभिश्च तैः ॥ २१२ ॥

---

१. 'नष्टौ कन्दान्' इति स्यात् । २. 'क्षेत्रमष्टाश्रि तदर्धायामविस्तृति' इति स्यात् । ३. 'स्यान्निर्गमो' इति स्यात् ।

मौलिकभ्रमणस्यान्ते त्रिपदायतविस्तृता ।
शालातिशोभना कार्या सार्धभागभ्रमान्विता ॥ २१३ ॥

द्विपदायामविस्तारे भागिकभ्रमणान्विते ।
कर्तव्ये पार्श्वयोस्तस्याः शाले द्वे चारुदर्शने ॥ २१४ ॥

प्रतिभद्रं विधातव्यं भागपञ्चकविस्तृतम् ।
भागत्रयं प्रविष्टं च तत्र शाला त्रिभागिकी ॥ २१५ ॥

भागद्वितयविस्तारा भागिकभ्रमणान्विता ।
पार्श्वयोः प्रतिभद्रस्य कर्णिके भागनिर्गमे ॥ २१६ ॥

सार्धभागायते स्यातां कर्णाः शालायुगान्विताः ।
पूर्ववच्छुण्डिकाद्यं च कमलेयमुदाहृता ॥ २१७ ॥

चतुर्दशविभक्तासु सप्तस्वस्तिषु(?) कल्पयेत् ।
निर्गमायामतुल्यासु शालाः पञ्च पृथक् पृथक् ॥ २१८ ॥

अग्रभद्रे तु कर्तव्यं शालात्रितयमुत्तमम् ।
इति वि(ज्ञेय?ज्ञैः) समाख्याता शाला वज्रधरप्रिया ॥ २१९ ॥

इत्थं जगत्यश्चतुरश्रसंस्थाः
(१स्पदायतां?) वर्तुलसन्निवेशाः ।
(वृत्तायता थस्तियुताश्चयः सम्यग्?)
जङ्घाः सदा शिल्पिभिरप्रमत्तैः ॥ २२० ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
जगतीलक्षणाध्यायो नामैकोनसप्ततितमः ॥

———:o:———

# अथ लिङ्गपीठप्रतिमालक्षणं नाम सप्ततितमोऽध्यायः ।

———:o:———

अथ प्रमाणं लिङ्गानां लक्षणं चाभिधीयते ।
(लोहं हस्तत्रिभागेन कनीयसम्?) ॥ १ ॥

---

१. 'स्तदायता' इति स्यात् ।

(<sup></sup>[1]र्यंशवृद्धानावेवं स्युराहस्तात्रतवाविधे?) ।
(ह्रस्वमध्योत्तमाख्यानि त्रीणि त्रीण्यकल्पकादिभिः ॥ २ ॥

लिङ्गनामभिः प्रासादस्यानुसारतः?) ।
अतश्च द्विगुणानि([2]स्युवारुणाजानि प्रमाणतः?) ॥ ३ ॥

([3]त्रिगुणान्यस्माज्जातानि?) मृत्तिकाप्रभवानि च ।
स्वस्य स्वस्य कनिष्ठस्य पदेन परिवर्तनात् ॥ ४ ॥

कनिष्ठायाने(?)हीनं च कर्तव्यं लक्षणं बुधैः ।
(सप्तमे यदि वा तिर्यग्रज्जलोधसन्निभाम् ॥ ५ ॥

स्तम्भद्रातौ दैतकैवलेषा विष्णुवारिता?) ।
पक्षरेखा विधातव्या लक्षणोद्धरणार्थनी(?) ॥ ६ ॥

पक्षक्षेत्रे कृते षोढा त्यक्तार्धांशकरैर्वृता(?) ।
पुत्रार्थिनां पक्षलेखा हिता ([4]राद्यपिर्थिनानामपि?) ॥ ७ ॥

अष्टभिर्नवभिर्वास्मिन् भक्ते त्यक्त्वांशकावधः ।
स्यात् पक्षलेखा षड्भिश्च सप्तभिश्चेष्टकामदा ॥ ८ ॥

यद्वा षोडशभिर्भक्ते विहायार्धोऽशकद्वयम् ।
(पशुरेखासरैर्नन्दैः स्तयैः शक्रैश्च शस्यते?) ॥ ९ ॥

लिङ्गेऽङ्गुलानि यावन्ति यवत्र्यंशैस्तदुन्मितैः ।
[5]लक्षणाद्वारणा कार्यमन्तरं लक्ष्यरेखयोः(?) ॥ १० ॥

रेखान्तरेषु (मांशस्य नर्थांशे?) पूर्वकसम्मितम् ।
खातं कुर्वीत रेखायां विस्तारं च विचक्षणः ॥ ११ ॥

कुर्यान्न लक्ष(णे द्वा?णोद्धा)रं लिङ्गे (लोहेचरत्रजे?) ।
बाणलिङ्गे चले चापि (तथातोजादिलक्षणम् ?) ॥ १२ ॥

पूजांशमेकादशधा भक्त्वोर्ध्वं सर्वतः स(मा?म)म् ।
तिर्यक् तथैकनवतिं भागानां शिरसो भजेत् ॥ १३ ॥

---

१. 'द्व्यंशवृद्धा नवैवं स्युरा हस्तत्रितयावधेः' इति स्यात् । २. 'स्युर्दारुजानि प्रमाणतः' इति स्यात् । ३. 'त्रिगुणान्यश्मजातानि' इति स्यात् । ४. 'विद्यार्थिनानामपि' इति स्यात् । ५. 'लक्षणोद्धारणं कार्यमन्तरे पक्षरेखयोः' इति स्यात् ।

भवेत् सहस्रं लिङ्गानां सैकमित्यसमैः पदैः ।
सहस्रलिङ्गमित्युक्तं (पञ्चाङ्कव्यङ्कमेवता?) ॥ १४ ॥

(अर्थो विभागं ववधा लिङ्गे सर्वमे भावयेत्?) ।
ऊर्ध्वं भागत्रयं त्यक्त्वा भागभागेन कल्पयेत् ॥ १५ ॥

भागेन (शकास्य?) ग्रीवाः कुर्यात् ततः परम् ।
भागद्वयेन (स्कन्धांशपणै युग्मपटानि च?) ॥ १६ ॥

(पुष्पसंस्थे च?)माशासु विहिते चतसृष्वपि ।
चतुर्मुखं भवेल्लिङ्गमर्चितं सर्वकामदम् ॥ १७ ॥

त्रिमु(खं?खे) तु ललाटा(दी)(ना?न्य)ज्ञान्यंशेन साङ्घ्रिणा ।
पृथक् पृथक् विधेयानि शेषांशात् स्कन्धकल्पना ॥ १८ ॥

ऐकचक्रे(?) तु सार्धेन ललाटा(दान?दीनि) कल्पयेत् ।
नवभक्ते (त्याचे?त्यजेद्) द्वौ द्वौ विभागौ पार्श्वयोर्द्वयोः ॥ १९ ॥

विधिरेष चतुर्वक्त्रे (विभक्ते?) पार्श्वयोर्द्वयोः ।
सार्धं सार्धं त्यजेद् (भूषा?)मेकवक्त्रे(र्धंशस्य च ?) ॥ २० ॥

चन्द्रार्धालङ्कृतं कार्यं (कू?ज)टाकूटधरं शिरः ।
शिरसो (वर्तते?) कार्या पूर्वप्रोक्तेन वर्त्मना ॥ २१ ॥

(ऍकत्र चातुरो स्यातां विसृते?) मुखनिर्गमः ।
स्याद्वा विभागै(राकेन्द्रि कारारव्यैर्यथाक्रमम्?) ॥ २२ ॥

मुखलिङ्गं न कर्तव्यं लिङ्गात् सर्वसमाद्दते ।
सर्वेषां मुखलिङ्गानां द्विदलं पीठमिष्यते ॥ २३ ॥

(तैज दैर्घ्यं?) जायन्ते त्रयस्त्रिंशत् सहोदितैः ।
(लो?लौ)हानि तद्वद् दारूत्थान्य(स्म?श्म)मृ(त्प?त्प्र)भवानि च ॥

तेषां (यवनवाल्यायान्यान्तराणि च ततोऽपि षट्?) ।
चतुराद्याश्चतुर्वृद्धा हस्तैः (सहस्तपद्धतः?) ॥ २५ ॥

---

१. 'एकवक्रे' इति स्यात । २. 'भाग' इति पाठः स्यात् । ३. 'वर्तना' इति स्यात् । ४. 'एकत्रिचतुरास्यानां विस्तृतेः' इति स्यात् ।

ये प्रासादा निरन्धारा नवलिङ्गानि तेष्विह ।
पञ्च+द्वादशाद्येषु साधारेष्वा शतार्धतः ॥ २६ ॥

एकाद्येकोत्तरैर्हस्तैः शैलजानि प्रचक्षते ।
प्रासादगर्भमानाद् वा प(ञ्चद?ञ्चां)शैस्त्रिभिरुत्तमम् ॥ २७ ॥

नवांशैः पञ्चभिर्मध्यं कनीयोऽर्धेन तद् भवेत् ।
प्रभेदैरन्त(र?रै)स्तेषां यथायोगं त्रिभिस्त्रिभिः ॥ २८ ॥

षडन्यानि भवन्त्येवं नवलिङ्गानि पूर्ववत् ।
तेभ्योऽप्यवान्तरैर्भेदैः प्राग्वत् सत्रिविधैर्युता(?) ॥ २९ ॥

दिशानया दारुजानि [1]++यल्लोहजानि च ।
(दौप्पे?दैर्घ्ये) षोडशधा भक्ते चतुर्भिः सुरपूजितम् ॥ ३० ॥

लिङ्गं विष्कम्भतो (नाद्यं भूतैः स अंशतैः?) शुभैः ।
भवेत् सर्वसमं षड्भिराद्याख्यं चतुरश्रकम् ॥ ३१ ॥

कोणे क(र्मा?र्णा)र्धसूत्रेण लाञ्छिते शेषलोप(मा?ना)त् ।
अष्टाश्रि स्यात् सप्तभक्ते (होनातुणेशयोरन्थ?) ॥ ३२ ॥

गर्भसीमार्धसूत्रेण वर्तनाद् वृत्तनिर्मि(त?ता) ।
अधोमध्योर्ध्वभागाः स्युश्चतुरश्रादिकाः क्रमात् ॥ ३३ ॥

ब्रह्मविष्णुमहेशानां दैर्घ्याल्लिङ्गे समोत्तमाः ।
(नमस्तेष्वपि लिङ्गानां थुथुभागतः?) ॥ ३४ ॥

(पूनाधेवैः?) विधातव्यौ भागौ ब्रह्मशिवाश्रयौ ।
लिङ्गस्य दैर्घ्यजं पीठे विस्तारोऽसौ विधीयते(?) ॥ ३५ ॥

लिङ्गविस्तारतश्चान्यत् पार्श्वपीठे विशिष्यते ।
तत्समो ब्रह्मणो भा(ग?गा)द् संप्रदायापहृत्य वा ॥ ३६ ॥

रुद्रभागो विधातव्यो ब्रह्मभा(गे?गो)ऽपि तद्वशात् ।
एवं कृते परिहृत(स्वा?स्त्वा)यदोषो भवेदिह ॥ ३७ ॥

कर्तुः (करेष्टेतुश्च?) स्यात् तस्मिन् परिहृते शुभम् ।
ऊर्ध्वं त्र्यंशस्य दानेन वर्तनाद् बालचन्द्रमाः ॥ ३८ ॥

१. 'कल्पये' इति स्यात्। २. 'हानात् कर्णाग्रयोरथ' इति स्यात्। ३. 'कारयितुश्च' इति स्यात्।

(कुक्कुटाण्डचंतुर्यस्य त्रपुसम्भवे तु?) ।
अष्टमां(स्या स?शस्य) तुच्छत्रं दानादर्धस्य वर्तनात् ॥ ३९ ॥

कृतेऽष्टांशे चतुर्धास्मिन् भागवृद्ध्या तदुच्यते ।
पुण्डरीकं विशालाख्यं श्रीवत्सं (शक्रसर्वनम्)[1] ॥ ४० ॥

लिङ्गेषु (लक्षणैर्द्वार?)[2] कर्तव्यः स च कथ्यते ।
रुद्रभागं त्रिधा भ(क्त्या?क्ता) द्वाभ्यां लक्षणमुद्धरेत् ॥ ४१ ॥

(शिरोर्धायतो लिङ्गे लक्षणापि?) तदिष्यते ।
यद्वायताननं षष्ठे कर्त(व्यः?व्यं) नवमांशके ॥ ४२ ॥

+वायं ++ वाकारपक्षरे(खा)विवर्जितम् ।
पार्श्वरेखात्रिभागेन विस्तृतं चतुरश्रकम् ॥ ४३ ॥

प्राग्वदष्टा(स्तिः?श्रि) वृत्तं च षडश्रिच्छत्रमस्तकम् ।
शत्रुमर्दनसंज्ञेन च्छत्रेण समलङ्कृतम् ॥ ४४ ॥

लिङ्गमिन्द्रार्चितं शस्तमैन्द्रदिग्विजयार्थिना(म्?) ।
प्रतिष्ठाप्यमिदं शत्रोर्यद्वा स्तम्भनमिच्छता ॥ ४५ ॥

लोकपालैश्चेति कुर्यात् + त्र्यंशार्धार्धलक्षणम् ।
ऐन्द्रे वज्राभमध्येऽ(स्या?स्य) (प)क्षरेखा विधीयते ॥ ४६ ॥

स्वदैर्घ्यदलरुद्रांशैः पञ्चभिश्चित्रभावना(म्?) ।
विस्तृतं चतुरश्रं स्यान्मध्ये वृत्ते च पूर्ववत् ॥ ४७ ॥

अश्रिभिः सप्तभिर्युक्तं वृत्तं स्वा(स्रा?स्र)विवर्जितम् ।
(प्राग्विस्ताराधेविस्तारि लक्ष्मस्योतमस्तकम्?) ॥ ४८ ॥

(पूद्वचे?यद्वै)कादशभिर्भक्ते पक्षयोश्च(छिभिः?)[3]स्त्रिभिः ।
लुप्तरंशैस्तदेवां(शैर्नो?शेनो)च्छ्रितं छत्रमिष्यते ॥ ४९ ॥

इदमग्न्यार्चितं लिङ्गं कृत्वाग्नेर्योजयेद् दिशम् ।
चिकीर्षुणारिसन्तापं प्रतिष्ठाप्यमिदं सदा ॥ ५० ॥

---

१. 'शत्रुमर्दनम्' इति स्यात् । २. 'लक्षणोद्धार' इति स्यात् । ३. 'त्रिभि' इति स्यात् ।

स्व(थै?दै)र्घ्यार्धनवांशानां पञ्चकेन प्र(वि)स्तृतम् ।
कुर्यात् कुण्डं च(ष्टाष्टं च पार्श्वयुगं?) त्रिभिस्त्रिभिः ॥ ५१ ॥

नवधा सर्वतः कृत्वा त्रींस्त्रीनुत्सृज्य कोणगान् ।
कुर्वीताप्य(स्त्र?स्त्र)मेवं स्यात् क्रमाद् वृत्तं विनाश्रिभिः ॥ ५२ ॥

मूर्धानं दशभिर्भक्त्वा भागात्रितय(ला?लो)पने ।
पक्षयोर्विहिते कुर्यादुच्छ्रितिं दशमांशतः ॥ ५३ ।

लक्षणं पूर्ववत् कार्यं (दण्डाग्रकोर?)[1]मग्रतः ।
(कथं यान्यादिश्वि?)[2]++ लिङ्गमेतज्जिगीषुभिः ॥ ५४ ॥

वधार्थं वा विपक्षाणां सर्वैर्वैत्रस्वता(न्वि?र्चि)तम् ।
(आग्नयवत्कविष्णोसाः किन्त्वर्तुस्यदशापिक ॥ ५५ ॥

स्वराशिर्मस्तकेरुक्ते?) सार्धभागपरिक्षते ।
पार्श्वयोः (स्यादभिर्लाभ?) खड्गाग्राभं च शस्यते ॥ ५६ ॥

(षड्भा?खड्गा)भिधमिदं लिङ्गं प्रतिष्ठाप्य (तु) निर्ऋतिः ।
(अथापश्यन्दिरासत्व?)[3] तत्त्व(व्यो?यो)गं च शाङ्करम् ॥ ५७ ॥

(सार्व सप्तांशकलिंविंष्वास्यारुणान्वितो?) ।
चतुर्भिर्लक्ष्म चैतस्य पाशाग्राभं (कतासिचत?) ॥ ५८ ॥

लिङ्गमेतत् प्रतिष्ठाप्य (वरुणास्वादिगासतम्?)[4] ।
यो(नं?गं)तथाप्तवानैशं कि(न्तै?न्त्वे)तच्छान्तिपुष्टिकृत् ॥ ५९ ॥

(स्वर्धे द्वादशभागांशैः सप्तभिः पुवतेनिले ।
वेष्णासांकं शोकैः भक्ते द्वित्रिलोपने परश्वतम्?) ॥ ६० ॥

विधेयं पूर्ववद् वृत्तं शरच्छत्रं विनापरम् ।
लक्ष्म ध्वजाग्रवच्चास्य (त्वैतस्रूपतांपरिः) ॥ ६१ ॥

अथाप (सुदिर्गसेत्वं?)[5] तथा योगं च शाम्भवम् ।
द्विषदुच्चाटविश्लेष(परौक्षकंपान्विधेश्वाभिः?) ॥ ६२ ॥

---

१. 'दण्डाग्राकारम्' इति स्यात् । २. 'स्थाप्यं याम्यादिशि' इति स्यात् ।
३. 'अथाप स्वं दिगीशत्वं' इति स्यात् । ४. 'वरुणः स्वादिगीशताम्' इति स्यात् ।
५. 'स्वदिगीशत्वं' इति स्यात् ।

प्रतिष्ठाप्यमिदं लिङ्गं (ेव्यधीयां+?) मनीषिभिः ।
(कार्यवारुणः सव्याक्षं किन्त्वाद्योसे गुरुदशाम्?) ॥ ६३ ॥

(पैत्तांशेमूर्द्धि?) पार्श्वस्थ + पादांशपरिच्युतैः ।
छत्रं स्यात्(परिच्युतेः?) लक्ष्म चैतस्य गदाग्रसदृशं भवेत् ॥ ६४ ॥

एतन्नेश्वरः कृत्वा (स्वँदिर्गासत्वसाद्य?)वान् ।
योगं च शिवधामाप्त्यै विभू(त्यं?तिं) प्राप्तवानतः ॥ ६५ ॥

(स्वद्वे?) रुद्रांशकैः षड्भिर्विस्तृतं चतुरश्रकम् ।
(भेवभक्ते त्रयं?) त्यागाद् भवत्य(था?ष्टा)श्रि पार्श्वयोः ॥ ६६ ॥

वृत्तं तु पूर्ववत् कार्यं कुक्कुटाण्डनिभं शिरः ।
(त्र्यंशवसयैर्नवभिः?) कुक्कुटाण्डमिदं भवेत् ॥ ६७ ॥

(भूषनवभिः पार्श्वयोस्त्रिस्त्रिशातनाः कुक्कुटाण्डकम् ?) ।
अश्रित्रयं च कर्तव्यं पूजाभागसमाश्रयम् ॥ ६८ ॥

शू(द्रा?ला)ग्रप्रतिमं लक्ष्म लिङ्गे कर्तव्यमैश्वरे ।
स्यादिदं योगसाम्राज्यज्ञानसम्प्राप्तिकारकम् ॥ ६९ ॥

ब्राह्मे स्याद् रौद्रवत् स(र्वे?र्वं) पद्मकुड्मलवच्छिरः ।
लक्ष्मा(स्मा?स्मि)न् कमलाकारं लि(ङ्गं?ङ्गे) कमलजन्म(नि?नः)॥

लिङ्गमेतत् प्रतिष्ठाप्य प्राजापत्यं प्रजापतिः ।
लेभे पदमतः (स्थाॅसिदं व्येषूपदेस्यतिः?) ॥ ७१ ॥

वैष्णवे रौ(द्र)वत् सर्वं शिरोऽस्मिन् कु(न्तु?न्त)सन्निभम् ।
भ(क्ता?क्त्वा) भवजतुल्यं वा कर्तव्यं लक्ष्म वैष्णवे ॥ ७२ ॥

पुण्यक्षेत्रोद्भवमिदं द्विजादीनां (सिताद्यया?) ।
संग्राहयेच्छिलाद्रव्यं (गुक्तयोषितयान्विराम्?) ॥ ७३ ॥

इदं पक्वमपक्वं वा (लोहतू?)भयगर्भितम् ।
अप(कृं?कृ) वज्रलेपाद्यं कर्तव्यं सिद्धि(सास्नु?)भिः ॥ ७४ ॥

---

१. 'वायव्यायां' इति स्यात् । २. 'सप्तांशे मूर्ध्नि' इति स्यात् । ३. 'स्वदिगी-शत्वमात्म' इति स्यात् । ४. 'भक्ते भागत्रय' इति स्यात् । ५. 'स्थाप्यमिदं श्रेष्ठपदे-प्सुभिः' इति स्यात् ।

भूतये लोहजं लिङ्गं सीसकत्रपुवर्जितम् ।
काञ्चन(पंयं?)शत्रुच्छेद(कायायि संचितम्?) ॥ ७५ ॥

(यास्य लिङ्गोक्तलक्ष्मैतत् त्रापुंसांनागाकुन्मचात्र्यादि?) ।
लोहोद्भवं वा यन्मात् ++ गुह्यकसिद्धिकृत् ॥ ७६ ॥

भि(क्ष?क्षू)णां चलमेतत् स्यान्मु(मूक्ष?मुक्षू)णां च वेश्मसु ।
श्रेष्ठं समस्त(रान्ताच्छूं?) व(ज्जज्जं?त्रजं) तदरिच्छिदे ॥ ७७ ॥

पद्मरागं (महाभृत्यौ?) सौभाग्या(पंर?) मौक्तिकम् ।
पुष्परागम(हा)नीलौ +यातीरसमुद्भवम् ॥ ७८ ॥

यशसे कुलसन्तत्यै तेजसे सूर्यकान्त(र?क)म् ।
ता+च्छं स्फाटिकं सर्वकामदं (शूलारस्रो?) ॥ ७९ ॥

मणिजं +++ श(त्रु?त्रु)क्षयाय (पुलका?) तथा ।
सस्यकं सस्यनिष्पत्त्यै (भोजगं?) दिव्यसिद्धिदम् ॥ ८० ॥

श्रेष्ठं (सारक्त+?) लिङ्गमारोग्याहितचेतसाम् ।
वैक्र(त?न्त)कसह्यावर्तराकायस्कान्तजं हितम् ॥ ८१ ॥

(क्षुद्र सिस्त्रिपु?) तन्मन्त्र +++ जातिसंस्कृतम् ।
फलं सम्यग् गुणादूह्यमन्यासु मणिजातिषु ॥ ८२ ॥

वर्णाभिधानसंस्थानविशेषाभ्य + तद्विदा ।
(पृथियां सपीठं वा त?) स्यान्नोर्ध्वं नवाङ्गुलात् ॥ ८३ ॥

सिद्धये (चरदारान्तावश्वनकाद्धा?) प्रशस्यते ।
सुसंस्थानं सुदीप्तं चेद(वाञ्चयं पिनयं?) दोषकृत् ॥ ८४ ॥

(सूक्ष्मोपकोगुणोपेत?) बलीयान् सर्वदोषकृत् ।
सान्निध्यकारणं दीप्तिः समस्तमणि(य?ज)न्मनाम् ॥ ८५ ॥

मानोन्मानप्रमाणादित्येषु ग्राह्यं नवा बुधैः ।
शैलं हस्तादधः (स्थे?श्रे)यः प्रासादेषु च शस्यते ॥ ८६ ॥

---

१. 'प्रभवं' इति, २. 'महाभूत्यै' इति, ३. 'य तु' इति, ४. 'पृथिव्यां वा स्वपीठे वा तत्' इति च स्यात् ।

ततश्चलमपि प्राहु(र्हीणाश्रयसित्रियो ।
इतश्चेदकृत्ये सुयवांकं पिण्डिकाधियाङ्कम् ॥ ८७ ॥

अर्था भागद्वये ता + + भागपिण्डिकावटे?) ।
वृत्ता भागास्त्रयोऽप्यस्य प्रतिष्ठा स्याद् गुहासु च । ८८ ॥

क्षेत्रे परिगृहीतेऽसौ देशे देशाधिपक्षयः ।
[निष्पन्नरूपप्रगुणं मण्डलां भाव्यसाकया ॥ ८९ ॥

सिद्धरालाम्रधौतेस्मिनभिः सिद्धरसं गतम् ।
यत्रोक्तः गर्भस्तंकास्यात् तत्रालेखात् समा भवेत् ॥ ९० ॥

करखीइजटाकाङ्क्षा हरितालविष्टेधिभिः ।
सर्वेषाभिः प्रविष्टाभिरनालिं ने लेखनीकृतम् ॥ ९१ ॥

प्रदेशो यानित्यां विश्रान्ति?] व्यक्तिकृद् भवेत् ।
विषरुद्रजटापथ्या(चन्द्र?)कन्दविभीतकैः ॥ ९२ ॥

सुदर्शनाश्वमाराभ्यामविदुग्धेन संयुतः ।
प्रलेपो यदि वा पार्श्वे (चि)ह्नाभिव्यक्तिहेतवे ॥ ९३ ॥

इदानीमिह पीठानां (स्तथाव?) कथ्यते ।
मानतो नामतो(र्घाच?)विशेषेतरसिद्धये ॥ ९४ ॥

(देव्यादि भेदवतीठं तु पदेको गर्भमानतः ।
तत्सिद्धिर्मुखतः प्रोक्त शुनं षंगे मुक्तयो ॥ ९५ ॥

कारादिलिङ्गमानेन यामितंन्यमुखं ततः?) ।
भुक्तये मुक्तये चैतान्युपदिष्टानि मुख्यतः ॥ ९६ ॥

लिङ्गवद् गर्भमानेन सम्यग्वा (ता)नि कल्पयेत् ।
लिङ्गदैर्घ्यप्रमाणानि (मानेषु वेश्मसा?) ॥ ९७ ॥

अव्यक्तमुक्तलिङ्गानां समं [विष्पतः ।
कारादिलिङ्गमानेन यामितान्यनुषङ्गतः ॥ ९८ ॥

भुक्तये भुक्तये तेनात्फपदिव्यभानां तदर्दाग्रविस्तृतिः ।
नृपार्कवित्तजायामास्तदर्धोच्छ्रायविस्तृतिः?] ॥ ९९ ॥

उत्तमादि सहार्घानां(?) सिद्ध्यै कुर्वीत पीठिकाम् ।
वृत्तं वा चतुरश्रं वा सर्वप्रासादलिङ्गगम् ॥ १०० ॥

वृत्तं व्यक्तेषु न हितं विनाशादि ++++ ।
विधिना पृथिवी ++ (पो?पा)वकी पूर्णसंज्ञिता ॥ १०१ ॥

भाभावती त्रपाक्षी(?) च गण्यन्ते ताश्च नामतः ।
इन्द्रादिलोकपालानां कार्या लिङ्गे(व्यचसु?)क्रमात् ॥ १०२ ॥

ऐशानलिङ्गे रौद्रान्ति ++ या पीठिका भवेत् ।
ते चैतासु त्रयेऽन्यास्तु(?) भुक्तिमुक्तिफलप्रदा ॥ १०३ ॥

(पपापपावरावापी वज्ज?) चन्द्रकला स्मृता
संवर्ता नन्दिकाव(र्ते?र्ता) चैताः साधारणा मताः ॥ १०४ ॥

अथ लक्षणमे(तेषां?तासां) सर्वासामभिधीयते ।
ऐन्द्रलिङ्गा वृत्ता पृथ्वी स्तम्भादौ चतुरश्रिका(?) ॥ १०५ ॥

चतुरश्रस्य यः कर्णस्तच्चतुर्थांशमष्टधा ।
कृत्वांशसप्तकेनास्य (तुर्यात्तर्गत्सकल्पनात्?) ॥ १०६ ॥

पाश्चात्यभागयोः पार्श्वे बहिः सूत्रस्थिताव(थे?) ।
वृत्तद्वयस्य भ्रमणं विदधीत विचक्षणः ॥ १०७ ॥

(चतुरश्रे पुरोगर्भसूत्राष्टस्यासवर्धनात् ।
कृतपत्रभमुद्देशं पार्श्वाभ्यां सूत्रमात्रयेत् ?) १०८ ॥

लोपनात् त्यक्तभाग(स्या होतासि?) पीठिका भवेद् ।
आग्नेयलिङ्गं स्याच्छ(क्र?त्रु)नाशसन्तापदाहकृत् ॥ १०९ ॥

क्षेत्रे+चतुरश्रेऽस्य द्वादशांशं परित्यजेत् ।
(पामदो गर्भनस्तेन?) वृत्तस्यार्धं समालिखेत् ॥ ११० ॥

इत्यर्धचन्द्राकारोऽयं (सामी?)भवति पीठिका ।
याम्यलिङ्गस्य नगरा(दिक्षिणास्था?)रिनाशनी ॥ १११ ॥

चतुरश्रे विभागार्धवर्धनात् पार्श्वयोर्द्वयोः ।
(पुरिस्वी?) भागवृद्ध्या च सूत्रद्वयनिपातनात् ॥ ११२ ॥

(रौत्संत्तत्या?) नैर्ऋती स्त्रीमरणद्वेषरोगकृत् ।
(पूर्वचन्द्रमाकृतिर्णा?) वारुणी परिमेखला(:?) ॥ ११३ ॥

शान्तिके पौष्टिके (चष्ट?चाथ) मृत्युनाशे(ने?च) पीठिका ।
प्रतीच्यो(?) षडंशस्य वृद्धिं कृत्वा +++तः ॥ ११४ ॥

(गर्भाव?) वृत्तलेखेन यत् सम्पातचतुष्टयम् ।
(कर्णाभ्यकर्णं?) भवेत् तेन वृ(त्ति?त्त)स्थानद्वयेन च ॥ ११५ ॥

षडश्रं सममा(ले)ख्यं यद्वा वज्रसमाकृति ।
नाभस्वती पीठिका स्यात् (पर्णेनि?)मरुतो दिशि ॥ ११६ ॥

कर्मस्वुच्चाटनाद्येषु विनियोज्या जिगीषुभिः ।
याक्षी त्रिमेखला वृत्ता वित्ताप्त्यै धनदार्चि(ते?ता) ॥ ११७ ॥

(गणाद्विमखलाष्पश्रितः?) ।
कुर्वीतैकेन खुरकं चतुर्भिर्जाड्यकुम्भकम् ॥ ११८ ॥

(द्वाभ्यामञ्जं तथैकेन प्रवेशोऽत्र जाड्यकुम्भस्य शस्यते ।
अञ्जूयस्य चतुर्भिस्तैः कर्णिकाया द्वये नराः?) ॥ ११९ ॥

एकेन कण्ठक(स्या?श्चा)तो निर्यात्येकेन कर्णिका ।
(विभाजैरं पुजं?) षड्भिस्ततश्चैकेन मेखलाः ॥ १२० ॥

पद्मेयं पीठिका ख्याता सर्वकामप्रदायिनी ।
क्षेत्रे षोडशधा भक्ते भागेन खुरको भवेत् ॥ १२१ ॥

चतुर्भि(र्जरांतां?) कुम्भस्त्रिभिरेकेन कर्णिका ।
त्रिभिः कण्ठश्चतुर्भिश्च पूर्ववन्निर्गमो भवेत् ॥ १२२ ॥

इ(मं?यं)+व्यक्तलिङ्गेषु पीठका स्यात् पयोधरा ।
(एवंविधैव चापीठ स्यात्किमुच्यक्तो?) लक्षणे ॥ १२३ ॥

भक्ते द्वादशभिः पीठमानं द्विर्भागिको भवेत्(?) ।
जगती(ति?तु) त्रिभिः (कुंसे?) द्वाभ्यामेकेन वेदिका ॥ १२४ ॥

कण्ठो द्वाभ्यामथैकेन वेदिका पुनरुत्तरा ।
एकैकेन तु भागेन ततः स्यात् पीठिकाद्वयम् ॥ १२५ ॥

---

१. 'पूर्णचन्द्राकृतिः कार्या' कार्या' इति स्यात् । २. 'कर्णाभ्यर्णे' इति स्यात् । ३. 'विभागैरम्बुजं' इति स्यात् । ४. 'जगती' इति स्यात् । ५. 'कुम्भो' इति स्यात् ।

एवं षडश्रा कर्तव्या वज्राक्षा पीठिका बुधैः ।
(पीठिका क्षेत्रेण निर्भक्तषो?) भागेन खुरको भवेत् ॥ १२६ ॥

द्वाभ्यां जङ्घाथ भागेन वेदी द्वाभ्यां तु कण्ठ(य?कः) ।
(उभयाभ्यां निर्गमः सा स्त्रीच्छि?) चन्द्रकला भवेत् ॥ १२७ ॥

(आपायनायपुद्यौ च पदारेखैव चामृता?) ।
भवेत् षण्मेखलादर्धादूर्ध्वकण्ठोऽथ भागिकः ॥ १२८ ॥

पट्टिकात्रितयं शेषे क्षे(त्र?त्रे) स्यान्निर्गमान्तरम् ।
रुद्रार्चिता पीठिकेयं संवर्तेत्यभिधानतः ॥ १२९ ॥

यां कृत्वा प्रकृतेरूर्ध्वं गताः संवर्तकादयः ।
रुद्रावोथस्तराख्यं(?) ते भेजिरे पदमव्ययम् ॥ १३० ॥

षोढा पीठोदये भक्ते भागं स्यात् पट्टिकात्रयम् ।
एकेन कण्ठो भागेन पट्टिकान्यापि भागिका ॥ १३१ ॥

नन्द्यावर्ताङ्किता सेयं नन्द्यावर्तेति कीर्तिता ।
साधारणीयं सर्वेषां लिङ्गानां सर्वसिद्धिदा ॥ १३२ ॥

(भवाकण्ठसुवासध्यानामियं सिद्धखुरा ।
दोदेरन्योनमिथै?) भवन्त्यन्याश्च पीठिकाः ॥ १३३ ॥

मा(स?न)संस्था न कथितास्तासामानन्त्यकारणात् ।
त्र्यंशेन गर्तः स्यादासां षोडशांशेन मेखला ॥ १३४ ॥

खातश्च नेयः श्वभ्रान्तं मेखलामध्यतो ह्य(तौ?सौ) ।
(प्राणालार्घासमा?) दैर्घ्यविस्ताराभ्यामुदग्दिशि ॥ १३५ ॥

[पञ्चाशद्विशयंस्ताल सद्वयंमन्तरा ।
सदांसद्विभयं प्रान्ते खातोऽग्रे द्विगुणामुखान् ॥ १३६ ॥

सार्धाभमेखला कार्याः प्राणालः स्वसूतं भागतः ।
गुणागुणास्त्रयो लिङ्गे तान्यापत्रेव?] भावयेत् ॥ १३७ ॥

आवर्ताः शोभनाकाराः शुभाः स्यु + + + + धः ।
(नतु?) पीठब्रह्मशिले शस्ते लिङ्गजात्यनुगे सदा ॥ १३८ ॥

(भर्ग?गर्भ)कर्णचतुर्थांशमाना स्याद् ब्रह्मणः शिला ।
+++गस्य कर्णेन यद्वा ब्रह्मशिला भवेत् ॥ १३९ ॥

(यांताभिषेक?) ब्रह्मशिला ब्रह्मांशतो भवेत् ।
ताव(त्या?ता)भ्यधिका[1] कार्या तस्याः कर्मशिला बुधैः ॥ १४० ॥

स्थापयेत् (पुरुषत्रया?) शि(वा?वं) मध्ये निवेशयेत् ।
ब्रह्माणं दक्षिणेनास्य वामतः पुरुषोत्तमम् ॥ १४१ ॥

अन्यथास्थापनादेषां प्रत्यवायो महान् भवेत् ।
(त्रिभागौना शचा?) स्यातां कोशान्तश्चक्रिणो भवेत् ॥ १४२ ॥

(त्रिभागोनस्तिवासातां कोशान्तश्चक्रिणो भवेत् ।
त्रिभागोन्नतस्यादान्तः कोकस्यान्तः?) पद्मजन्मनः ॥ १४३ ॥

ब्रह्मविष्णुमहेशानां[2] ++++ निवेशने ।
प्रमाणमेतेषु (द्विश्च?) पृथक्स्थानां यदृच्छया ॥ १४४ ॥

उमामहेश्वरौ यत्र तत्रोमा ब्रह्मविष्णुवत् ।
आकाशे(?) प्रतिमा (येष्टा?)[3] चत्वारिंशच्च पञ्च च ॥ १४५ ॥

हस्तान् कार्या त्रिभागोना मध्या हीना तदर्धतः ।
यात्रार्था प्रतिमा द्वारप्रमाणेन विधीयते ॥ १४६ ॥

(भव?तच्च) द्वारं त्रिधा (चत्वा?भक्त्वा) पीठं भागेन कल्पयेत् ।
(ता?द्वा)भ्यां (तु) प्रतिमा कार्या ज्येष्ठा(स्या?यां) मानमीदृशम् ॥
मध्यायां नवधा द्वारं कृ(ते?त्वै)कं भागमुत्सृ(ते?जेत्) ।
शेषान् भागान् त्रिधा कृत्वा पीठं भागेन कल्पयेत् ॥ १४८ ॥

अर्चाप्रभाभ्यां हीनायां विदध्याद् द्वारमष्टधा ।
ए(व?क)मुत्सृज्य शेषेण ++++++++ ॥ १४९ ॥

पी(ठात्?ठं) त(त्)त्रितयेनार्चामुप(रि?)विष्टां प्रकल्पयेत् ।
द्वारस्यार्धं त्रिधा कृत्वा द्वाभ्यां पीठं विधीयते ॥ १५० ॥

(चाक्लप्तिरुक्तवतयद्वा?) द्वेधा चतुर्धा वा द्वारं कृत्वैकमुत्सृजेत् ।
शेषं भागत्रयं कृत्वा पीठमर्चां च पूर्ववत् ॥ १५१ ॥

---

१. 'यावताभ्यधिका' इति स्यात् । २. 'क्रमोऽयं स्याद्' इति पूरणीयं भाति ।
३. 'ज्येष्ठा' इति स्यात् ।

द्वारोच्छ्रितेः पञ्चदशभागं (कृ?) त्यक्त्वा विधीयते ।
भागत्रयं तदेकेन पीठमर्चा तु (तद्)द्वयात् ॥ १५२ ॥

भागान् पञ्च विधीयेत यदिवा भागयुग्मतः ।
पीठं (तत्)त्रितयेनार्चामुपविष्टां प्रकल्पयेत् ॥ १५३ ॥

द्वारस्यार्धं त्रिधा कृत्वा द्वाभ्यां पीठं विधीयते ।
भागेनार्चा(शयानागार्धेऽर्चा?) वेश्मानुसारतः ॥ १५४ ॥

भक्ते प्रासादगर्भा(द्वे?र्धे) दशधा पृष्ठभागतः ।
पिशाचरक्षोदनुजाः स्थाप्या गन्धर्वगुह्यकाः ॥ १५५ ॥

(आदित्यचन्द्रिकाविष्णुब्रह्मेशानान्ता?) पदक्रमात् ।
गर्भे षड्भागभक्ते वा त्यक्त्वैकं (पृथता शत?)[1] ॥ १५६ ॥

स्थापनं सर्वदेवानां पञ्च(मेशो?मेंऽशे) प्रशस्यते ।

यदङ्गप्रत्यङ्गप्रहरणगतं लक्ष्म विततं
तदर्थानां (चित्रकृनावधो वाच्यसक्ष्य?) ।
सपीठा(र्था?र्चा)लिङ्गोन्मिति(मपि) विदित्वा व(टु?हु)मतो
भवेद् भूपालानां कृतिभिरपि पूज्येत सकलैः ॥ १५६ ½ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
लिङ्गपीठप्रतिमालक्षणं नाम सप्ततितमोऽध्यायः ॥

———:०:———

# अथ चित्रोद्देशो नामैकसप्ततितमोऽध्यायः ।

———:०:———

अथ(प्रियं विते?)[2]ऽस्माभिर्विन्यासश्चित्रकर्मणः ।
(रा?चि)त्रं हि सर्वशिल्पानां मुखं लोकस्य च प्रियम् ॥ १ ॥

(पदे पदे वा?)[3] कुड्ये वा यथा(चित्रं सं वचने[4]) ।
वर्तयः कृतबन्धाश्च लेखामानं यथा भवेत् ॥ २ ॥

---

१ 'पृथगंशकम्' इति स्यात् २. 'प्रपञ्च्यते' इति स्यात् । ३. 'पट्टे पटे वा' इति स्यात् । ४. 'चित्रस्य सम्भवः' इति स्यात् ।

(वर्णगव्यक्तिया?)[1] यादृग् यादृशो वर्तनाक्रमः ।
मानोन्मानविधिश्चैव नवस्था(ने?न)विधिस्तथा ॥ ३ ॥

हस्तानां यश्च विन्यासो (लक्षणनात्रसंशय?) ।
दिव्यानां मानुषाणां च (दिव्या सा मुखजन्मना?)[2] ॥ ४ ॥

गणरक्षःकिन्नराणां कुब्जवामन(यस्तेषाम्?)[3] ।
विकल्पाकृतिमानानि रूपसंस्थानमेव च ॥ ५ ॥

वृक्षगुल्मलतावल्लीवीरुधां पापकर्मणाम् ।
शूराणां दुर्विधानां च धनिनां पृथिवी(क्षि?भृ)ताम् ॥ ६ ॥

ब्राह्मणानां (विसासोडजातन?)[4] क्रूरकर्मणाम् ।
मानिनामथ रङ्गोपजीविनां चेह(ङ्ग?क)थ्यते ॥ ७ ॥

रूपलक्षणनैपथ्यं सतीनां राजयोषिताम् ।
दासीप्रव्रजितारण्डा(यतिवल्लीषु लक्षणा ॥ ८ ॥

कन्यानामसंकारणां च विध्याना?)गजवाजिनाम् ।
मकरव्यालसिंहानां तथा यज्ञोपयोगिनाम् ॥ ९ ॥

(विना?)[5]रात्रिविभागस्य ऋतूनां चापि लक्षणम् ।
(अत्र योज्यं याप्यंश्च कथं भवति?) ॥ १० ॥

प्रविभागस्य देवानां रेखाणां चापि लक्षणम् ।
लक्षणं पञ्चभूतानां तेषामारम्भ एव च ॥ ११ ॥

वृकादीनां विहङ्गानां सर्वेषां जलवासिनाम् ।
चित्रन्यासविधानस्य ब्रूमः सम्प्रति लक्षणम् ॥ १२ ॥

(कर्मण कर्मा करमे?) यस्माच्चित्रकर्मणि वर्तते ।
तस्याङ्गान्यभिधीयन्ते तेन सर्वाणि विस्तरात् ॥ १३ ॥

वर्तिका (प्र)थमं तेषां द्वितीयं भूमिबन्धनम् ।
लेख्यं तृतीयं स्याद् रेखाकर्माणि (वर्ततेमिह लक्षणम्?) ॥

---

१. 'वर्णव्यक्तिक्रमो' इति पाठः स्यात् ।　२. 'दिव्यमानुषजन्मनाम्' इति, ३. 'योषिताम्' इति, ४. 'विशां शूद्रजातीनाम्' इति, ५. 'दिवा' इति च स्यात् ।

पञ्चमं (कर्षकर्मच[1]) षष्ठं स्याद् वर्तनाक्रमः ।
सप्तमं (लेखनं लेखकरणं द्विचकर्म?) तथाष्टमम् ॥ १५ ॥

सङ्ग्रहोऽयमिति (चैवं कर्मणः[2])
(सूत्रिति तदनुक्रमेणा थः[3]) ।
भावयेन्न खलु मोह(मः?मे)त्यसौ
चित्रकर्मणि कृती च जायते ॥ १६ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
चित्रोद्देशाध्यायो नाम[4] (सप्तमः?) ॥

---:o:---

## अथ भूमिबन्धो नाम द्विसप्ततितमोऽध्यायः ।

---:o:---

इदानीं वर्तिकालक्ष्म भूमिबन्धश्च कथ्यते ।
गुल्मान्तरे शुभे क्षेत्रे पद्मिन्यां सरितस्तटे ॥ १ ॥

पार्वतानां च कक्षेषु वापि(का)काननान्तरे ।
भौमा लवणपिण्डाः स्युर्मूलेषु च महीरुहाम् ॥ २ ॥

क्षेत्रेष्वेतेषु या जाताः स्थिराः श्लक्ष्णा(श्च) पाण्डराः ।
ग्राह्या (मृद्वावसासेष्वा?) विज्ञेया क(र?तु)शर्करा ॥ ३ ॥

क्षेत्राणामानुपूर्व्येण मृत्तिका कथिता शुभा ।
पेषयेत् कुट्टयित्वा तां ततः कल्कं समाचरेत् ॥ ४ ॥

शालिभक्तस्य दातव्यस्तत्र भागो यथोदितः ।
ग्रीष्मर्तौ सप्तमं भागं शीतकाले च पञ्चमम् ॥ ५ ॥

षष्ठं शरदि वर्षासु चतुर्थं भागमानयेत् ।
वर्तिकाबन्धनार्था(यादार्थ[5])मायान्ति तेन ता(ः) ॥ ६ ॥

(अग्राया शालिवक्त्राभा यवं यव्यां सुखगृहम् ।
कुर्कुटाराग्रसदृशी?) कर्मभागविकल्पतः ॥ ७ ॥

---

१. 'वर्णकर्म स्यात्' इति स्यात् । २. 'चित्रकर्मणः' इति स्यात् । ३. 'सूत्र्यते स्म तदनुक्रमेण यः' इति स्यात् । ४. 'नाम एकसप्ततितमः' इति स्यात् । ५. 'यदार्थं' इति स्यात् ।

शिक्षाकालेऽङ्गुलद्वन्द्वं प्रमाणेन विधीयते ।
कुथरेखासु शस्यन्ते वर्ति(काः)त्र्यङ्गुलोन्मिताः ॥ ८ ॥

(पटा?)रेखासु कुर्वीत मानेन चतुरङ्गुलाः ।
इदानीमभिधास्यामो वसुधाबन्धनक्रियाम् ॥ ९ ॥

पक्षिका चैव कूटाश्च + + + पट एव च ।
तस्य तस्य (किभान?) भूमिबन्धो निगद्यते ॥ १० ॥

पुण्यनक्षत्रवारेषु माङ्गल्यदिवसेषु च ।
(क्षतो[1] वासो भुक्त्ता) च कर्ता भर्ताथ शिक्षकः ॥ ११ ॥

अनेकवर्णैः कुसुमैर्गन्धैः (न कृपापाः?) ।
नानाधूपैः सुरभिभिरर्चयित्वारभेत ताम् ॥ १२ ॥

[नवसूत्रात्तुलमृद्धस्तितजलेन समं समम् ।
नवत्वामात्सदृशं व्यक्तनभविद्वात्यपराक्रियः ॥ १३ ॥

लिङ्गसूत्रविनीक्षेतानिकटं सहतं नवः ।
अनुत्तमनिस्मं च कुर्याद् यावत् क्षितौ समम् ॥ १४ ॥

सुस्थितं जलवक्षायं?] सम्यगालोक्य धीमता ।
कृत्वा भूमिक्रियामेतां पश्चाद् बन्धनमाचरेत् ॥ १५ ॥

(लुचिमलांस्तिस्व?) व्रीहितण्डुलसन्निभाम् ।
संगृ(स्य?ह्य)तीर्थमथवा पिष्ट्वा कल्कं समाचरेत् ॥ १६ ॥

तेन पिण्डं प्रकुर्वीत (शोषे[2]येचतमात्तयो?)
(शवयेत्[3] ?) कल्कयेद् येन (व्यासाद्यषव्यस्तुयाः?) ॥ १७ ॥

एवमेव (चतुष्कोन्ता?) सप्त वारान् प्रघर्षयेत् ।
हस्तेन संमृशेत् पश्चाद् यथा (लोनं?) च जायते ॥ १८ ॥

अथवा शिक्षिकाभूमौ (ख)रबन्धनमाचरेत् ।
पूर्वोदितस्य कल्कस्य निर्यासे बन्धनं क्षिपेत् ॥ १९ ॥

---

१. 'कृतोपवासो भक्त्या' इति स्यात् । २. 'शोषयेच्च तमातपे' इति स्यात् ।
३. 'भपयेदि'ति स्यात् ।

पञ्चभागप्रमाणेन ग्रीष्मकालेषु शस्यते ।
शरद्यंशत्रयं सार्धं त्रीनंशा(समागमम्?) ॥ २० ॥

वर्षाकाले हि भागेन प्रदद्यादिति निश्चयः ।
पञ्चभागप्रमाणेन ग्रीष्मसं + + + + + + ॥ २१ ॥

([1]बन्धानयं प्रकुर्वीतापपूर्वकं धिनाक्षितो?) ।
(लो?ले)पयेद् रोमकूर्चेण शुष्कां शुष्कामनुक्रमात् ॥ २२ ॥

तोयेन हस्त(क्तवचि?) प्रदातव्यो विचक्षणैः ।
विधिनैवं कृतं श्रेष्ठं शिक्षिकाभूमिबन्धनम् ॥ २३ ॥

बन्धनं कुड्यभूमेश्च यथावत् कथ्यतेऽधुना ।
स्नुहीवास्तुककूश्माण्डकुद्दालीनामुपाहरेत् ॥ २४ ॥

क्षीरमन्यतम([2]स्यापामामीस्येक्षरुकस्य?) च ।
(तेषांणां वागसूत्रे?) सप्तरात्रं निधापयेत् ॥ २५ ॥

([3]सिंहपासननिम्बानां त्रिफलव्याधेर्यातयो?) ।
स(मो?मा)हरेद् यथालाभं (कथया?)कुटजस्य च ॥ २६ ॥

कषाय(का?क्षा)रयुक्तेन सामुद्रलवणेन च ।
([4]पूर्वा कुड्यं रामं कृत्वा कषायैः परिषे परिषेभयतु?) ॥ २७ ॥

चिक्क(ण?णां?) मृदमादाय स्थूलपाषाणवर्जिता(मू) ।
(मानुषां?)स्ताद्द्विगुणान् (न्य)स्य([5]स्वदय)वा(च?)लुकाम्(दा?द)म्

ककुभस्य ([6]स्कन्दद्याधा)न्माषाणां शाल्मलेरपि ।
श्रीफलानां रसं तद्वद् दद्यात् कालानुरूपतः ॥ २९ ॥

पूर्वकालानुसारेण यत् प्रोक्तं बन्धनं क्षितेः ।
तत् सर्वं सिकतायुक्तं कृत्वैकत्र (न)वं बुधः ॥ ३० ॥

---

१. बन्धने च प्रकुर्वीत पूर्वोक्तविधिना क्षितौ' इति स्यात् । २. 'स्यापामार्गस्येक्षुरकस्य' इति स्यात् । ३. 'शिंशपासननिम्बानां त्रिफलाव्याधिघातयोः' इति स्यात् । ४. पूर्वं कुड्यं समं कृत्वा कषायैः परिषेचयेत्' इति स्यात् । ५. 'क्षोदयेद्' इति स्यात् । ६. 'रसं दद्या' इति स्यात् ।

(कुमाद्यमालयापातं म?)हस्तिचर्मप्रमाणतः ।
(विशेषां ष्याथ प्रतिक्षिपेत् तोयं कुर्यादशसन्निभाम् ?) ॥ ३१ ॥

विशुद्धं विमलं स्निग्धं पाण्डुरं मृदुलं स्फुटम् ।
पूर्वोदितां समादाय विधिवत् (कण्टकर्करीम् ) ॥ ३२ ॥

तां कुट्टयित्वा घृष्ट्वा च कल्कं कुर्याद् विचक्षणः ।
पूर्वोक्तभक्तभागं च निर्यासांश्च प्रदापयेत् ॥ ३३ ॥

(विष्वङ्क?) यदिवा दद्यात् (कूटसर्करया?) समम् ।
त्रीन् वारा(न्) लेपयेत् कुड्यं पूर्वोक्तेन विचक्षणः ॥ ३४ ॥

हलेन हस्तमालिप्य प्रदद्यात् (कूटकूर्तकाम् ?) ।
जायते विधिनानेन कुड्यबन्धनमुत्तमम् ॥ ३५ ॥

साम्प्रतं कथयिष्यामः पट्टभूमिनिबन्धनम् ।
बिम्बाबीजानि संगृह्य त्यक्त्वा तेषां मलं बुधः ॥ ३६ ॥

एवं वि(सृद्ध?शोध्य) निष्पावान् यदिवा(न्य?) शालितण्डुलान् ।
तेषामन्यतमं श्लक्ष्णं पिष्ट्वा पात्रे विपाचयेत् ॥ ३७ ॥

पट्टमालिप्य बन्धेन पूर्वोक्त(मिवा?विधिमा)चरेत् ।
पूर्वोक्त(निर्यासा पुना विधात्तयः?) कटशर्कराम् ॥ ३८ ॥

तोयेन तां (प्रवांकृत्य?) पटमालेखयेत् तया ।
अनेन विधिना बन्धश्चित्रकर्मणि शस्यते ॥ ३९ ॥

विधिनान्येन वा कुर्यात् (सादानां?) भूमिबन्धनम् ।
(प्राद्यद्यामिकतालपङ्कनिर्यास?)समन्विताम् ॥ ४० ॥

निर्याससंयुतां दद्यात् त्रिस्ततः कटशर्कराम् ।
(पाटायनां?) भूमिबन्धोऽयं विक्षेप्तव्यः प्रयत्नतः ॥ ४१ ॥

(गोमयेन कटंपेने शैस्तदनन्तरम् ?) ।
(कंटशर्करयुक्तिवारास्त्राक्तर्चकेन च?) ॥ ४२ ॥

---

१. 'कुड्यमालेपयेत् पूर्वं' इति स्यात् । २. 'कटशर्कराम' इति, ३. 'कटशर्करया' इति, ४. 'कटशर्कराम्' इति च स्यात् । ५. 'निर्यासयुतां विधाय' इति स्यात् ६. 'द्रवीकृत्य' इति स्यात् । ७, ८. 'पट्टानाग' इति स्यात् । ९. 'कटशर्करया युक्तैर्वारांस्त्रीन् कूर्चकेन च' इति स्यात् ।

(यथा पन्थत्तास्वां पश्चाद् भूमिबन्धः कटेपिहः[1]) ।

इति निगदितमेवं लक्षणं वर्तिकाना-
(मिहकपदकुड्यक्ष्मानिविविविधेश्च?) ।
इदमखिलमवैति (प?ग्र)न्थतो योऽर्थतश्च
(प्रतिवति स विधातुर्विभ्रमस्यास्य योगात्?) ॥ ४३ $\frac{1}{2}$ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे
भूमिबन्धो ना(मैक?म द्वि)सप्ततितमोऽध्यायः ॥

---

# अथ लेप्यकर्मादिकं नाम त्रिसप्ततितमोऽध्यायः ।

---

लेप्यकर्म समृल्लक्ष्म (लेक्षा[2]?)लक्ष्म च कथ्यते ।
वापीकूपतटाकानि पद्मिन्यो दीर्घिकास्तथा ॥ १ ॥

वृक्षमूलं नदीतीरं गुल्ममध्यं तथैव च ।
मृत्तिकानामिति क्षेत्राण्युक्तान्येतानि तत्त्वतः ॥ २ ॥

तासां वर्णः सिताक्षौद्रसन्निभो गौर एव च ।
कपिलश्चेति ते स्निग्धाः शस्ता विप्रादिषु क्रमात् ॥ ३ ॥

(इन्द्रांशी?) मृत्तिका ग्राह्या स्थूलपाषाणवर्जिता ।
शाल्मली(शा?मा)षककु(भं?भ)मधूकात्रिफलोद्भवम् ॥ ४ ॥

रसं विनिक्षिपेत् तस्यां (पं[3]प्रेक्षस्यसिकथितां चपि?) ।
क्रमुकं(चनका?)बिल्वे सटालोमानि वाजिनः ॥ ५ ॥

गवां रोमाणि वा दद्यान्नालिकेरस्य (क?व)ल्कलम् ।
मृदा संयोज्य मृद्नीयाद् दद्याद् वा द्विगुणांस्तुषान् ॥ ६ ॥

(वां[4]लुकातीवतीचापि त्तपासांयोगयेन्मृदम्?) ।
भागद्वयं मृत्तिका(यै?यां) कार्पासांशेन मिश्रयेत् ॥ ७ ॥

---

१. 'यथा पट्टे तथैव स्याद् भूमिबन्धः पटेऽपि सः' इति स्यात् २. 'लेखा' इति स्यात् । ३. 'प्रक्षिप्य सिकतामपि' इति स्यात् । ४. 'वालुका यावती चापि तावतीं योजयेन्मृदम्' इति स्यात् ।

तदेकीकृत्य मृद्भागं तृतीयमुपरि क्षिपेत् ।
पूर्वोदितां स(नि?न्नि)धाय ततश्च कटशर्कराम् ॥ ८ ॥

क(ल्यं?ल्कं) विधाय(:?) चीरेण रूपं तत्परिवेष्टि(ता?तम्) ।
तेन निर्यासयुक्तेन कुर्यादाकारमादृतः ॥ ९ ॥

कटशर्करया लिम्पेत् कूर्चकेन विचक्षणः ।
मृत्तिकाकाथसङ्घाताल्लेप(क)र्म प्रशस्यते ॥ १० ॥

(रवयेल्लोहसङ्घातं लसंकार्यसुधामध्ययये ।
युक्तं पक्षेत संयोज्य मोममान योजयेत् ॥ ११ ॥

अनेपकं समायुक्तं?) कर्तुः स्थानविनाशनम् ।

लेपकर्ममृत्तिकानिर्णयः ॥

विलेखा(ल)क्षणं सम्यगिदानीमभिधीयते ॥ १२ ॥

कूर्चनं कूर्चकेनाथ द्वितीयं हस्तकूर्चकम् ।
तृतीयं भासकूर्चाख्यं चतुर्थं चल्लकूर्चनम् ॥ १३ ॥

(वर्तनं पञ्चमं वर्तन्यकूर्चमान्यकूर्चनमिष्यते ।
लेप्यकर्माणि तच्छस्तमनामणवः ॥ १४ ॥

जलचूर्णकमानीतमिह सत्सन्तितो?)+ + ।
कूर्चकं धारयेद् धीमान् वृषश्रवणरोम(ति?भिः) ॥ १५ ॥

+ + + + + + + + + + तत्कृतकूर्चकैः ।
वल्कलैर्वा विधातव्यः खरकेशैरथापि वा ॥ १६ ॥

कूर्चको (येमतिर्यापि?) विहितोऽत्र प्रशस्यते ।
(कूर्चकं धारयेद् धीमान् वृषश्रवणरोमभिः?) ॥ १७ ॥

तन्तूतः कूर्चकः श्रेष्ठो विले(प?खा)कर्मणि स्वतः ।
(आद्यो वदाङ्कुराकारस्ततो स्वच्छाङ्कुराकृतिः?) ॥ १८ ॥

प्लक्षसूचीनिभश्चान्यस्तृतीयः कूर्चको भवेत् ।
उदुम्बराङ्कुराकारश्चतुर्थः परिकीर्तितः ॥ १९ ॥

---

१. 'आद्यो वटाङ्कुराकारस्ततोऽश्वथाङ्कुराकृतिः' इति स्यात् ।

स्थूला लेखा न कुर्वीत वटाङ्कुरनि(भे?भा)दितः ।
न्यूनलेखा न कुर्वीत प्लक्षाङ्कुरसमेन च ॥ २० ॥

अश्वत्थाङ्कुररूपेण यत्र (विद्वत्सहीकरात् ?) ।
उदुम्बराङ्कुराकारो लेप्यकर्मणि शस्यते ॥ २१ ॥

ज्येष्ठः स्यादायतो दण्डो वैणवो + + + ङ्गुलः ।
लेप्यकर्म [1] + + + समासतः
संस्कृ(तं?तेः)विधिरनन्तरं मृदः ।
अत्र सम्यगुदिता विलेखनी
कूर्चकस्य रचना (च) पञ्चधा ॥ २२$\frac{१}{२}$ ॥

इति महाराजाधिराजपरमेश्वरश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे लेप्यकर्मविलेखाकूर्चकाध्यायो नाम (द्वि?त्रि)सप्ततितमः ॥

———:o:———

## अथाण्डकप्रमाणं नाम चतुःसप्ततितमोऽध्यायः ।

———:.:———

अथात्र प्रक्रमायाता कथ्यतेऽण्डकवर्तना ।
कायप्रमाणमपिच जातिभावादिसंश्रयम् ॥ १ ॥

अथ (मध्योतिरालिख्य तारका सन्निवेशयेत् ।
तारका?)त्रयमालेख्य तत्रान(न)समायाति ॥ २ ॥

ताव(त्)प्रमाणमायामं गोल(क)स्योत्तमं विदुः ।
तेन गोलकत्वेन(?) मानोन्माने तु कारयेत् ॥ ३ ॥

मुखाण्डकस्य विस्तारो (लेप?;पट्)केन सम्मितः ।
द्विदैर्घ्यं तु (?) गोलकाः सप्त वापीसंस्थानमेव च ॥ ४ ॥

मुखाण्डकमिदं श्रेष्ठं कर्तव्यं चित्रकर्मणि ।
त्रिकोटि वृ(न्ति?त्त)मालेख्यं वृत्ताण्ड(क)मिति क्रमात् ॥ ५ ॥

१. 'गदितं' इति स्यात् ।

(भावाण्डकान्यथ ब्रूमः सोहस्याभिप्रस्तवेडकम्?) ।
गोलार्धाभ्यधिकं कार्यं (पूर्वेस्तोत्तद्विचक्षणैः?) ॥ ६ ॥

अर्धगोलकमायामादलसाण्डकमुच्यते ।
नवगोलकदैर्घ्यं तदद्वहासमुखं(?) भवेत् ॥ ७ ॥

पुंसां षडा(दात्तं?यतं) मानं विस्तारात् पञ्चगोलकम् ।
वनिताण्डकमालेख्यं नालिकेरफलोपमम् ॥ ८ ॥

चतुर्गोलकविस्तीर्णमायतं पञ्चगोलकान् ।
शिशूनामण्डकं तावत् कर्तव्यं चित्रकर्मणि ॥ ९ ॥

(हास्योभिः प्रस्त्रवेत्?) तस्य गोलकार्धान् विशेषयेत् ।
आलस्याण्डकमप्येवं रोदनं तद्वदेव तु ॥ १० ॥

षड्गोलक(प्र)विस्तारमायतं सप्तगोलकम् ।
राक्षसस्याण्डकं कुर्याच्चन्द्रमण्डलसन्निभम् ॥ ११ ॥

(हास्योभिप्रस्तवे?) तस्य गोलकार्धान् विशेषयेत् ।
देवाण्डकं प्रमाणेन तदालस्येऽत्र कीर्तितः(?) ॥ १२ ॥

षड्गोलक(प्र)विस्तारं गोलकाष्टकमायतम् ।
(वृत्तांया?) समालेख्यं दिव्याण्डकमिति स्मृतम् ॥ १३ ॥

अथाभिधीयते दिव्यमानुषाण्ड(न?क)(वि?)लक्षणम् ।
गोलकार्धाधिकं (भे?त)च्च कार्यं मानुषमानतः ॥ १४ ॥

पञ्चगोलकविस्तीर्णं षड्गोल(सेकमायुतम्?) ।
मुखाण्डं मानुषं कृत्वा(केत्तरस्य?) विधीयते ॥ १५ ॥

शिशुकाण्डकमानेन प्रमथानां मुखाण्डकम् ।
राक्षसाण्डकमानेन यातुधानाण्डकं भवेत् ॥ १६ ॥

दानवस्याण्डकं कुर्याद् देवानां वदनोपमम् ।
गन्धर्वनागयक्षाणां तद्वदेवाण्डकं भवेत् ॥ १७ ॥

विद्याधराणां विज्ञेयं दिव्यमानुषमण्डकम् ।
बुध्यन्ते केऽपि शास्त्रार्थं केचित् कर्माणि कुर्वते ॥ १८ ॥

---

१. 'वृत्तायतं' इति स्यात् । २. 'कसमायतम्' इति स्यात् ।

करामलकव(त्यास्यं पर?)द्वयमप्यदः ।
न वेत्ति शास्त्रवित् कर्म न शास्त्रमपि कर्मवित् ॥ १९ ॥

यो वेत्ति द्वयमप्येतत् स हि चित्रकरो वरः* ॥ १९$\frac{1}{2}$ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारनाम्नि वास्तुशास्त्रे

अण्डकप्रमाणं नाम (त्रि?चतुः)सप्ततितमोऽध्यायः ॥

---

## अथ मानोत्पत्तिर्नाम पञ्चसप्ततितमोऽध्यायः ।

---

ब्रूमोऽथ(मातमङ्गणां?)[1] परमाण्वादि तद् भवेत् ॥ १ ॥

परमाणू रजो रोम लिक्षा (प्ररिका?)[2] यवोऽङ्गुलम् ।
क्रमशोऽष्टगुणा वृद्धिरे(व?वं) मानाङ्गुलं भवेत् ॥ २ ॥

द्वयङ्गुलो गोलको ज्ञेयः कलां वा तां प्रचक्षते ।
द्वे कले गोलकौ (बाहौ?)[3] भागो मानेन तेन तु ॥ ३ ॥

आयामाद् विस्तृतेश्चित्रमन्यूनाधिकमाचरेत् ।
देवादीनां शरीरं स्याद् विस्तारेणाष्टभागिकम् ॥ ४ ॥

(त्रिंदशद्?)[4]भा(गा)यतं चैतद् विदध्याच्चित्रशास्त्रवित् ।
असुराणां (सेरं?)[5] स्याद् भागान् स(मा?प्ता)र्धसंयुतान् ॥ ५ ॥

विस्तारेण तदायामादेकान्नत्रिंशदिष्यते ।
सप्तभागं राक्षसानां विस्तारेणायतं पुनः ॥ ६ ॥

सप्तविंशतिभागं स्याद् यत् पुनर्दिव्यमानुषम् ।
(सार्धा तु षडंशास्त कुर्यात्याद्धशत्यायतम् ?) ॥ ७ ॥

---

१. 'मानगणनम्' इति स्यात् । २. 'यूका' इति स्यात् । ३. 'वा द्वौ' इति स्यात् । ४. 'त्रिंशद्' इति स्यात् । ५. 'शरीरं' इति स्यात् ।

---

* अध्यायावसाने नियमेन दृश्यमानां तत्तदध्यायविषयक्रोडीकरणकारिकां विनैवेहाध्यायपरिसमाप्तिर्ग्रन्थकृतायामुपलभ्यते, एतदध्यायारम्भे 'कायमानमपि च' इति यद् विषयान्तरं प्रतिज्ञातं, तत् समनन्तराध्याये सप्रपञ्चं निरूप्य मध्ये 'अण्डकवर्तना' 'कायमानमि'त्येतयोरेतदध्यायगतयोर्द्वयोर्विषययोः क्रोडीकारः कारिकारूपेणाध्यायावसान इव निबद्धः ।

